प्रसरमाशंक्य विकारार्थकमयट्श्रुत्या तत्परिहारईक्ष्यते पुच्छयोजनायां कामाच्चेति सूत्रव्याख्याने । "एतस्मादात्मन आकाशस्संभूतः" इत्यानन्द-वल्ल्युपक्रमः । आनन्दवल्ल्यामेव तत्तद्विषयश्लोकेषु मयड्रहितकेवलप्राण-मनोविज्ञानशब्दाःप्रयुक्ताः मयडन्तपदैकविषयत्वेन । तेषां मयडन्तप्राणमयादि विषयत्वं श्रुत्यैव स्पष्टमुक्तम् । का वा प्रत्याशा मयड्बलेन आनन्दानन्द-मययोर्भेदवर्णने । "तदप्येषश्लोको भवति' इति वाक्यानि शांकर-भाष्यादिषु तथैव व्याख्यातानीति पूर्वमेव प्रदर्शितम् । इत्थञ्च न केवलं श्रुत्या, किन्तु स्वभाष्यादिभिश्च मण्युक्तिः प्रतिषिद्धा । श्रुतिबुद्ध्यात्रमयडन्त-मयड्रहितपदयोर्नभेद इति सुनिरूपितं पूर्वमेव । स्थानप्रमाणेन च श्रुति-बुद्ध्या तदर्थसिद्धिः । कामादिसूत्रतद्भाष्यन्यायादपि तत्सिद्धिः । "जीव-वाचित्वपक्षेऽपि विकारार्थत्वं न संभवति, तस्यापि नित्यत्वेन घटादेरिव कार्यत्वायोगात् विकारवाचिनो मयटश्च प्रकृत्यर्थान्यथाभावरूपविकार-वाचित्वमेव युक्तम्, तत्रैव प्रयोगदर्शनात्, व्याकरणस्मृतिगतविकारशब्द-स्वारस्याच्च । अतोत्रानन्दमयः प्रभूतानन्दः परएव ।" इति परपक्षनिराकृत्युक्तमकल्पनीयम् । जीवस्य कार्यत्वोक्तिः श्रुतिसूत्रप्रतिषिद्धा । उत्पत्त्यसंभवाधिकरणमपि विस्मृतम् ॥

मणिः (५) पृ – "बिम्बस्यैव प्रतिबिम्बरूपेणान्यथाभावेन प्रति-बिम्बस्य बिम्बकार्यत्वस्य तद्विकार्यत्वस्य वाविरोधात्, प्रतिबिम्बस्या-नित्यत्वेन बाधकाभावात्, 'तत्त्वमसि, अहं ब्रह्मास्मी' ति बाधायामेव सामानाधिकरण्यमिति मतस्यापि जागरूकत्वात्, अवच्छेदवादेप्यवच्छेद-कस्य ब्रह्मकार्यत्वेनानित्यत्वेन वावच्छिन्नस्यापि घटाकाशादेरिवान्तःकरणा-द्यवच्छिन्नजीवस्य स्वरूपतो नित्यत्वेपि विशिष्टरूपेणानित्यत्वात्, जीवस्य, क्वचिदुत्पत्तिश्रवणस्य क्वचिन्नित्यत्वश्रवणस्य चौपाधिकमनित्यत्वं स्वरूपतो इत्यस्मत्सिद्धान्तार्थः । "अस्मिन् प्रकरणे सर्वत्र 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति परमात्मन एव शारीरात्मत्वाभिधानात् । कथं,

नित्यत्वमित्येवमविरोधात् । तथा च सूत्रं 'चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशोभाक्तस्तद्भाव भावित्वात्" इति" ॥

उत्तरम् — 'अविकार्योऽयमुच्यते', 'अजो नित्यः शाश्वतोऽयं पुराणः', 'नित्यो नित्यानां', 'सत्यस्य सत्यं प्राणावै सत्यं तेषामेष सत्यं', 'नात्मा श्रुतेर्नित्यत्वाच्चताभ्यः' इति श्रुतिस्मृतिसूत्रैर्जीवानां सत्यत्व-नित्यत्वाविकार्यत्ववादिभिर्मण्युक्तयो बाध्यन्ते । पाणिन्यनुशासनेन न स्वमतमात्रकल्पितेषु विकारत्वेनाप्रसिद्धेषु प्रतिबिम्बेषु विकारार्थकमयट्-प्रयोगसंभवः । अभ्यासेन सामानाधिकरण्यं जीवब्रह्मणोः बाधायां जड-चैतन्ययोः इत्यद्वैतग्रन्थ भूयःप्रसिद्धिः । जीवब्रह्मणोरपि बाधायां सामानाधिकरण्यमित्यस्ति किञ्चिन्मतमद्वैतैकदेशिनां, तन्मतरीत्या चेतन-स्यापि विकार्यत्वमिति साधयामीति मण्याशयः । अद्वैतैकदेशि परिकल्पित-परिभाषाः न वैयाकरणसम्मताः । प्रतिबिम्बेषु विकारार्थकमयट्प्रयोगस्य न पाणिनिसूत्रात्प्राप्तिः । नापि तस्य प्रयोगानुग्रहः । उपनिषद्भाष्येषु सूत्रभाष्ये च विज्ञानमयादिपदस्थमयटां विकारार्थत्वं प्रतिषिद्धं भगवत्पादैरेव प्रामाणिकतया । स्वभाष्यादिग्रन्थप्रतिषेधं विना नास्मन्मतप्रतिषेध-संभवः । चराचरसूत्रस्य मण्यभिमतार्थः खण्डितः श्रुतप्रकाशिकायाम् । अस्मद्भाष्यार्थ एव सूत्राक्षरस्वरसः । व्यपदेशभाक्ताभाक्तशब्दाः सूत्र-काराभिमतयत्किञ्चिच्छब्दबोधमर्यादाप्रदर्शने स्वरसाः । 'तद्गुणसारत्वात्तु तद्व्यपदेशः' इति सूत्रे शब्दप्रयोगविषये कश्चिन्न्यायो व्युत्पादितः । तदभिध्यानसूत्रे तेज आदिशब्दास्तत्तच्छरीरकपरमात्मपर्यन्तवाचका इति 'तत्तेज ऐक्षत' इत्यादिवाक्येषु तेजश्शरीरपरमात्मन ईक्षणमुक्तं भवति । 'तेजःप्रभृतयश्चशब्दास्तदात्मभूतं ब्रह्मैवाभिदधति' इति श्रीभाष्यनिगमनं 'अन्तराविज्ञानमनसी' इति सूत्रे । तत उपरि 'नन्वेवं सर्वशब्दानां ब्रह्मवाचित्वे सति तैस्तैश्शब्दैस्तत्तद्वस्तुव्यपदेशो व्युत्पत्तिसिद्धः उपरुध्येत - तत्राह –' इति चराचरसूत्रमवतारितं तत्र । तदभिध्यानसूत्रार्थस्समानो

भाष्यद्वयेऽपि । 'तत्तेज ऐक्षत' इत्यत्र तेजश्शब्दस्य तेज आत्मनाऽवतिष्ठमानः परमेश्वरः' इत्यर्थो भाषितः । 'तल्लिंगा' दिति सूत्रखण्डस्य 'तथा हि शास्त्रं 'यः पृथिव्यां तिष्ठन्' इत्यादि' इति च भाषितम् । तेजआदिशब्दानां तदन्तर्यामिवाचकत्वविषये विचारः क्रियत इति स्फुटं सूत्राक्षरेभ्यः । 'जन्मादिव्यपदेशश्चराचरदेहविषयो मुख्यः । जीवे तु भाक्तः औपाधिकजन्मादिविषयस्स्यात्, उपाधिजन्मभावेभावात्, असति, अभावात् इति सूत्रार्थः' इति रत्नप्रभोक्तस्सूत्रार्थः । अन्वयव्यतिरेकाभ्यां एतत्सूत्रे जीवस्य स्वरूपत उत्पत्तिप्रलयाभावस्य साधितत्वे नात्माधिकरणस्य पुनरुक्तता दुष्परिहरा । 'महासर्गादौ तदन्ते चोत्पत्तिनाशौ जीवस्य भविष्यत इति शङ्कान्तरमपनेतुमिदमारभ्यते' इति भामत्युक्त परिहारस्य मन्दता सुस्पष्टा । तस्य सूत्राक्षरानुग्रहविधुरता च स्फुटा । आनन्दमयशब्दे मयटो विकारार्थत्वाभावः प्रसिद्धत्वेन दृष्टान्ततयोदाहृतः अन्तराविज्ञानमनसी सूत्रे 'अन्नमयमिति च मयट् आनन्दमय इतिवन्न विकारार्थः' इति भामत्याम् ॥

मणिः (६) पृ — 'श्रीभाष्यमते चराचरसूत्रे तद्व्यपदेश इति तत्पदं व्यर्थम् । अद्वैतमत एव तु तत्सार्थकम्' ॥

उ – अस्मद्भाष्येऽस्य सूत्रस्योभयथार्थो भाषित इति न जानाति मणिकृत् । शरीरवाचिशब्दानां शरीरिपर्यन्तवाचित्वाभिधानेऽस्ति शरीरशरीर्युभयव्यपदेशकत्वं शब्दानाम् । व्यपदेशशब्दमात्रप्रयोगे उभयोर्मध्ये कस्येति संशयो भवेत् । तच्छब्देन पूर्वोक्तचराचरग्रहणमिष्टम् । शरीरिपर्यन्तवाचकत्वे सति, अब्रह्मविदामपूर्णव्युत्पत्तीनां शरीरमात्रग्राहिणां विशेषणमात्रवाचकत्वरूपतन्मात्रव्यपदेशो भाक्तः, वाच्यैकदेशमात्रे भज्यते, भंक्त्वा प्रयुज्यते । भाक्तशब्दोऽस्मिन्नर्थे स्वरसः । विशिष्टवाचकत्वे सति विशेषणमात्रे भंक्त्वा प्रयोगो गौणः इति चोक्तं, यथा 'गौण्यसंभवात्',

'गौणश्चेन्नात्मशब्दात्' इत्यादिषु । तेजश्शब्दस्य तेजआत्मकब्रह्मार्थकत्वं खलूक्तं तदभिध्यानसूत्रे । शरीरमात्रं येषां प्रतीतं तेषां तन्मात्रग्राहकत्वं, भंक्त्वा एकदेशमात्रे भञ्जनेन लभ्यते । 'तद्भावभावित्वात् — प्रतीतिभावभाविनी जनानां व्युत्पत्तिः । 'प्रकारिप्रतीतिभावभावित्वाच्च तत्पर्यवसानस्य लोके तत्तद्वस्तुमात्रे वाच्यैकदेशे ते ते शब्दाः भंक्त्वा व्यपदिश्यन्ते' इति श्रीभाष्यम् । 'ननु वाय्वादिशरीरकब्रह्मणोऽव्याद्युत्पत्तौ वाय्वादिशब्दानां तच्छरीरकब्रह्मणि लक्षणा स्यादित्यत्राह — चराचरव्यपाश्रयस्तु इति । तुशब्दः शङ्कानिवृत्त्यर्थः । चराचरव्यपाश्रयो देवमनुष्यादिवृक्षादिव्यपदेशो भाक्तः । वाच्यैकदेशे भज्यत इत्यर्थः । सर्वेषां चराचरशब्दानां विशिष्टं ब्रह्मैवार्थः । विशेषणमात्रप्रयोगस्त्वमुख्यः । ततश्च वाय्वादिशरीरकं ब्रह्माभिधानं मुख्यमेव । यद्वा अभाक्त इति च्छेदः । वाय्वादिशब्दैर्ब्रह्मव्यपदेशोऽभाक्तः मुख्य इति यावत् ।' इति श्रीरङ्गरामानुजमुनयः । 'चराचरव्यपाश्रयस्तु तद्व्यपदेशः - चराचरमात्रविषयपर्यवसायित्वेन व्युत्पन्नस्तद्वाचिशब्दः इत्यर्थः । ब्रह्मभावशब्देन ब्रह्मानुप्रवेश उच्यते । ब्रह्मणः तत्रभावो ह्यनुप्रवेशः । अस्यां योजनायां सर्वशब्दानां ब्रह्मवाचित्वे प्रमाणोपन्यासः श्रौतः स्यात् । व्युत्पत्तिविरोधशङ्कापरिहारस्त्वार्थः सिद्ध्यति । एवं विशेषणभूतपृथिव्यादिषु क्रमनिर्देशो मुख्यः । ब्रह्मणः तत्तद्वस्तुविशिष्टत्वात् सर्वस्य ब्रह्मप्रसूतत्वश्रवणं मुख्यम् । सर्वतत्त्वानां यावद्द्रव्यसत्ताकविशेषणतया ब्रह्मशरीरत्वं मुख्यम् । अभिध्यानश्चात एव मुख्यम् । अतस्सर्वश्रुतिमुख्यत्वं सिद्धान्त उक्तं भवति ।' इति श्रुतप्रकाशिका । तच्छब्दस्य वैयर्थ्यापादनमस्मद्ग्रन्थाऽनभिज्ञतानिबन्धनम् । यथा रूपव्याकरणं स्वात्मना तत्रतत्रान्तरवस्थानेन क्रियते, तथा नामव्याकरणमपि तत्तन्नामनिर्वाच्यविश्रान्तिभूमितयावस्थानेन क्रियते इति श्रुतिसूत्रानुभूतो रसः । यथा तत्तद्रूपेषु ब्रह्मण आत्मत्वरूपपर्यवसानभूमित्वं तथा नामस्वपि तस्य वाच्यपर्यवसानभूमित्वम् । नामानि सर्वाणि

यमाविशन्ति' । आत्मभूतब्रह्मपरिष्वङ्गे वाचां रसः । उशन्तिताः आत्मपरिष्वङ्गं तत्पर्यन्तगमनं, तत्र विश्रमं च । "त्वय्यच्युताऽऽविशति त्रित्तं मे" इति रुक्मिणीप्रणयलेखः । प्रियकान्तावद्वाचः । "वचसां वाच्यमुत्तमम्", न केवलं पुरुषोत्तमः । "सर्वे वचसां प्रतिष्ठा यत्र शाश्वती" । एतत्सूत्रानन्तरं जीवस्य कार्यत्वाकार्यत्वादि विचारः 'नात्माश्रुतेः' इति । अत्रैव तद्विचार कथनमस्वरसं पौनरुक्त्यापादकञ्च । "देवदत्तनाम्ने जीवाय श्राद्धं कुर्वन्ति' इत्यादिकं वदन्तः, देवदत्तादि-शब्दानां पिण्डविशिष्ट जीववाचकत्वं, उत्पत्तिमरणादि व्यवहारस्य तदेक-देशभूतशरीरोत्पत्त्यादि द्वारकञ्च वर्णयन्ति' इति परभाष्यम् । अस्म-दुक्तार्थे एव तद्भाष्यस्याप्यन्ततः पर्यवसानम् । "व्यपाश्रयः', 'व्यपदेशः', 'भाक्तः', 'अभाक्तः' इत्यादि पदानां शब्दव्युत्पत्तिविषय न्यायव्युत्पादन पिशुनानां स्वारस्यमस्मत्सिद्धान्तार्थे रसिकरस्यम् ॥

मणिः (६) पृ — "यद्यपि "अन्योन्तर आत्मा आनन्दमयः" इत्यात्मपदं ब्रह्मपदस्थाने प्रयुज्यमानमानन्दमयब्रह्मतापक्षेऽपि न विरुद्धम्, तथाप्यन्नमयाद्यमुख्यात्मसमानाधिकरणः आत्मशब्दो मुख्यवृत्त्यैवानन्दमय-पर्यायमात्रे आत्मत्वस्य बोधक इति कल्पनेऽपि प्रक्रमभङ्गो दुरपह्नव एव । तदेवमानन्दमय इत्यत्र विकारार्थकसंभवमभिप्रेत्याऽऽनन्दमयाऽब्रह्मतावादो व्यवस्थापितः ॥

उत्तरम् – अस्मन्मते निष्कर्षं न जानातिमणिः । स्वमतनिष्कर्ष-मपि न जानाति । "तस्माद्वा एतस्मादात्मन" इत्यत्रात्मशब्दस्सर्वात्मक (सर्व शरीरक) ब्रह्मार्थक इति यदुच्यते तन्मतद्वयसंप्रतिपन्नार्थः । 'तस्यैष एव शारीर आत्मा' इति प्राणमयपर्यायादारभ्याऽऽनन्दमय-पर्यायान्तं चतुर्वारमभ्यस्तम् । विश्वस्य शारीरात्मनः आनन्दमयत्व-पूर्णानन्ददायित्व प्रदर्शिकेयमानन्दमयविद्या । चतुर्ष्वपिवाक्येषु "एष एव शारीर आत्मा" इत्युक्तः विश्वशरीरकं सर्वान्तरात्माऽऽनन्दमयः

इत्यस्मत्सिद्धान्तार्थः । 'अस्मिन् प्रकरणे सर्वत्र 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति परमात्मन एव शारीरात्मत्वाभिधानात् । कथं' 'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः' इत्याकाशादिसृज्यवर्गस्य परमकारणतया प्रज्ञातजीवव्यतिरेकस्य परस्य ब्रह्मण आत्मत्वेन 'व्यपदेशात्तद्व्यतिरिक्ताकाशादीनामन्नमयपर्यन्तानां तच्छरीरत्वमवगम्यते । 'यस्य पृथिवीशरीर' मित्यादि श्रुतिषु सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्ट-मभिधीयते । अतः "तस्माद्वा एतस्मादात्मनः' इत्यत्रैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतः । प्राणमयं प्रकृत्याह – 'तस्यैष एवे' ति । पूर्वस्यान्नमयस्य यः शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतः परमात्मा, स एव, तस्य - प्राणमयस्यापि शारीर आत्मेत्यर्थः । एवं मनोमयविज्ञानमययोर्द्रष्टव्यम् ।" इति श्रीभाष्यम् । इदं सुविशदमुप-पादितं तट्टीकायाम् । "पूर्वपूर्वकोशस्योत्तरोत्तरः कोश एवात्मेति व्याख्यातमापातदर्शनेन, तदसत् आत्मशब्दस्याऽमुख्यार्थत्वप्रसंगात् । प्रकृतपरामर्शितच्छब्दकोपाच्च ।" इत्यानन्दगिरिरपि अस्मद्भाष्यार्थमेव शांकरभाष्यतात्पर्यत्वेन वदति । "अन्वयादिति चेत्स्यादवधारणात्" इत्यानन्दाद्यधिकरणान्तिमसूत्रे इमान्येव वाक्यानि विचारितानीति पूर्वमेव प्रदर्शितम् । "प्राणमयेऽन्नमयादन्तरत्वमात्रेण परमात्मबुद्धिर्जाता । पूर्वत्र तु निवृत्ता उत्तरोत्तरे तत्तदन्तरे चात्मशब्दः प्रयुक्तः । यस्मादन्यदन्तरं नास्ति, ईक्षणादिकञ्च श्रुतं, तस्मिन्परमात्मबुद्धिरात्मशब्दश्च प्रतिष्ठितौ । एवं पूर्वत्रापि परमात्मबुद्धिविषय एवात्मशब्दप्रयोगात् अयमप्यात्मशब्दः परमात्मविषय एवेति नात्रोपक्रमबाध इत्यर्थः" इति श्रुतप्रकाशिका । 'उपक्रमेऽप्यपरमात्मनि परमात्मबुद्ध्याऽऽत्मशब्दान्वय इति निरवद्य' मिति श्रीभाष्यम् । 'तस्यैष एव शारीर आत्मा' इति वाक्येषु प्रक्रमभङ्ग-चोद्यमज्ञानैकनिबन्धनम् । अन्यच्च, 'यत्प्राये श्रूयते यच्च तत्तादृगवगम्यते । भाक्तप्राये श्रुतमिदं ततो भाक्तं प्रतीयते' इति पूर्वाधिकरणभामतीपूर्व-पक्षकारिकारीतिरेवात्रावलम्ब्यते मणिनास्मद्दूषणाय । सिद्धान्तिनिरस्ताः

पूर्वपक्षयुक्तय एव मण्यवलम्बनयुक्तयः । 'आत्मगृहीतिरितरवदुत्तरात्', 'अन्वयादिति चेत्स्यादवधारणात्' इति सूत्रद्वयेनेयमाशङ्का उद्भाव्य निरस्ता । माण्डूक्यश्रुतावानन्दमयपदे मयटः प्राचुर्यार्थकत्वमेव भाषितं शाङ्करभाष्ये । पुच्छभाष्ये मनोमयविज्ञानमयानन्दमयपदस्थमयटां विकारार्थत्वभाषणं स्वबहूक्तिव्याहतमिति पूर्वमेव प्रदर्शितम् । श्रुति-सूत्रस्वबहुग्रन्थविरुद्धमत्र विकारार्थकत्ववर्णनमत्यन्तास्वरसम् । 'विप्रति-षेधाच्चासमञ्जस'मिति सौत्रन्यायः विप्रतिषेधजटिलपरमतग्रन्थान् किं न स्पृशेत् ॥

मणिः (७) पृष्ठे— प्राचुर्यार्थकत्वेऽपि प्राचुर्यस्य स्वसमानाधि-करणविजातीयाल्पतानियामकत्वात् दुःखाल्पत्वस्य च ब्रह्मण्यसंभवात् आनन्दमयपदे स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वस्य प्रक्रमप्राप्त-पञ्चमकोशत्वोपपादकस्य बाधकप्रमाणाभावादुत्सर्गत्यागेऽपि न कारणं पश्यामः । यदि प्रमाणान्तरेणानन्दमयस्य ब्रह्मत्वं सिद्धं स्यात् तर्हि प्रकृते प्राचुर्यस्य दुःखाल्पत्वानिरूपकत्वं युज्येत, परन्तु न तत्र प्रमाणलेशोऽपि वर्तते ॥

उत्तरम्— आनन्दमयशब्द एव माण्डूक्यश्रुतौ प्राचुर्यार्थकत्वे दुःखलेशविधुरे ब्रह्मणि प्रयुक्त इति पूर्वमेव प्रदर्शितम् । मणिकृता मुद्रितायां पञ्चग्रन्थ्यां स एव वदति (१९१) पृष्ठे 'प्रज्ञानघन एवानन्दमयः, इति वाक्ये तु अगत्योक्तनियमः (दुःखाल्पत्वनियमः) परित्यक्तः । तस्य जीवत्वे प्रायपाठादीनामभावात्' इति । इत्थञ्च तदुक्त्यैवानन्दमयपदस्य ब्रह्मणि श्रुतिप्रसिद्धिस्सिद्धा । 'आनन्दमयमात्मानमुपसंक्रामती'ति श्रुतिवाक्ये आनन्दमयपदस्य ब्रह्मवाचकत्वं भाष्योपक्रमे भगवत्पादैरेव प्रसिद्धत्वेन भाषितमिति पूर्वमेवोक्तम् । 'अन्तराविज्ञानमनसी'ति सूत्रे भामत्यामानन्दमयपदस्थमयटः प्राचुर्यार्थकत्वेन प्रसिद्धवद्दृष्टान्तीकरणमपि प्रदर्शितं पूर्वम् । मनोमयविज्ञानमयादिशब्दानां प्राचुर्यार्थकत्वे श्रुति-प्रसिद्धिर्भगवत्पादोपनिषद्भाष्यादिसिद्धा । ज्योतिर्मयतेजोमयसुखमयानन्द-

मयादिशब्दानां तमोदुःखादिगन्धाक्षेपकत्वं विनैव भगवत्पादादिभिः प्रयुक्तत्वं पूर्वमेव प्रदर्शितम् । ब्रह्मशब्दघटितश्लोकः आनन्दमयविषय एव पठित इति श्रुत्यैव 'तदप्येष श्लोको भवति' इति स्पष्टमभिहितम् । वल्ल्यन्तपठितस्य 'यतो वाचः' इति श्लोकस्यानन्दमयविषयत्वं श्रुत्यैव स्पष्टमभिहितं 'तदप्येष श्लोको भवति' इति । बहुभिः प्रमाणैः, बहुभिः श्रुतिस्मृतिकाव्यादिप्रयोगैरत्रत्यश्रुतिवाक्यैश्चानन्दमयस्य ब्रह्मत्वसिद्धिः प्राचुर्यार्थकमयटः दुःखादिलेशानाक्षेपकत्वसिद्धिश्च । आनन्दमीमांसायां व्यधिकरणसजातीयानन्दाल्पत्वस्य विस्तरेणोपपादनरूपप्रकरणानुसारेणापि मयडर्थो निर्धारणीयः । मण्युक्तः उत्सर्गः अप्रामाणिकः लोकवेदप्रयोगविरुद्धश्च । 'जीवन्मुक्तिरिति प्रथामुपगता सैवेयमाजानतो भूमानन्दमयीति निश्चिनुमहे मोदामहे चान्ततः' इति जीवन्मुक्तिपरिणयनाटके । 'प्रमाणान्तरादसिद्धिः', 'न तत्र प्रमाणलेशोऽपि वर्तते' इत्युक्तिर्मिथ्या । माण्डूक्यश्रुतिप्रयुक्तानन्दमयपदस्य ब्रह्मत्वमुक्तं मणिकृतैव पञ्चग्रन्थ्याम् । 'आनन्दमयमात्मानमुपसंक्रामति' इति चरमात्मत्वेनानन्दमयं पठित्वा तस्मिन्नेव विषये 'यतो वाचः' इति श्लोकः पठित इति श्रुत्यैव निस्सन्दिग्धमभिहितम् । सर्वस्मै जलाञ्जलिः, स्वपूर्वोक्तिभ्योऽपि स्वोक्तिभ्योऽपि । 'जीवत्वे, प्रायपाठादीनामभावात्' इति मण्युक्तिरसंगता । अत्रानन्दमयस्य जीवत्वे कः प्रायपाठः । प्राणमयमनोमयौ न जीवौ । विज्ञानमयो जीवः श्रुतिसूत्रप्रसिद्ध्या, शब्दस्वारस्याच्च । तदनन्तरस्तदन्योऽन्तर्याम्यात्मा परमात्मैव भवेत् । विकारार्थकमयट्प्रायपाठो नास्ति इति पूर्वमेव विस्तरेणोपपादितम् । अन्तर्यामिब्राह्मणे आत्मशब्दो बहुकृत्वः पठितः परमात्मनि 'स त आत्मा अन्तर्याम्यमृतः' इति बहुवाक्येषु, तथापि 'य आत्मानमन्तरो यमयति' इति तत्रैवात्मशब्दो जीववाची । 'भूयान् भूयान्' इति भूयो भूयो भूमशब्दस्याऽब्रह्मणि पठितत्वेऽपि ब्रह्मणि भूमशब्दः प्रयुक्तः ॥

मणिः – "प्रत्युताकामहत श्रोत्रियसाधर्म्येण सातिशयानन्द-

वत्वेनानन्दमयस्य आनन्दमीमांसायां प्रक्रमात् , पूर्वोक्तरीत्याऽऽ नन्दमयाब्रह्मताया एवोपरितनस्य सर्वस्य सन्दर्भस्य स्वारस्याच्च ।"

उत्तरम् — इदमत्यन्तमिथ्या, यत्र यत्रात्रानन्दमय आत्मा निगद्यते तत्र सर्वत्र तस्य सर्वान्तरात्मत्वमनन्यात्मत्वं निरतिशयानन्दत्वञ्च स्पष्टं निगद्यते श्रुत्यैवेति पूर्वमेव प्रदर्शितम् । सर्वान्तरात्मत्वेनैव आनन्दमय आत्मास्पष्टं द्विर्निगदितः श्रुत्या, "एतमानन्दमयमात्मानमुपसंक्रामति ," "एतमानन्दमयमात्मानमुपसंक्रम्य" इति वाक्ययोरिति सुविशदं पूर्वमेव प्रदर्शितम् । प्रथमवाक्याव्यवहितानन्तरं 'तदप्येष श्लोको भवति' इति पठितत्वात्, पठिष्यमाणश्लोकस्यानन्दमयविषयत्वं नेति न केनापि वक्तुं शक्यम् । श्लोकोऽपि ब्रह्मण आनन्दमयत्वमेवोपपादयति । द्वितीयवाक्ये आनन्दमयप्रवेशं निगद्य ल्यपा तत्क्षणमेवानन्दपूर्णमोक्षप्राप्तिर्निगदिता श्रुत्या । अत्रापि सर्वेषामवयवानामानन्दत्वस्य सावधारणोक्त्या, तद्विषय एव 'असन्नेवे' ति श्लोकपठनाभिधानेन च, "तस्यैष एव शारीर आत्मा यः पूर्वस्य" इत्यनन्यात्मत्वपठनेन च दुःखगन्धाभावः स्फुटीकृतः । दुःखमयत्वेन सर्वलोकप्रसिद्धं संसारिजीवमानन्दमयनाम्ना व्यपदिशति श्रुतिरिति कथनं नूनमुपहास्यम् । "आनन्दमयस्य आनन्दमीमांसायां" इति वदन्मणिरानन्दमयाऽऽनन्दस्यैव मीमांसा कृतेति तत्वमभ्युपगच्छति । अवशोक्तं चेत् तस्य प्रामाणिकत्वं दृढतरम् । अवशत्वं च अकारवाच्यभगवद्वशत्वं, तदेव परवशत्वमिति व्यवह्रियते । वक्तुरन्तरात्मा आनन्दमयस्तदभिनिवेशाविरुद्धं तथा भाषत इव । अकामहतः श्रोत्रियो मुक्तः । ब्रह्मानन्देन मुक्तानन्दस्य साम्यं, सर्वसंसारिजीवानन्दादधिकत्वञ्च प्रतिपाद्यते श्रुत्यामूलाग्रम् उपक्रमब्राह्मणसूत्रवाक्ये 'पर' मिति सूचितां, मन्त्रवर्णे च स्पष्टमुक्तां ब्रह्मविदो मुक्तस्य सर्वोत्कृष्टानन्दप्राप्तिं ब्रह्मणा सह तदानन्दानुभवञ्च विशदीकर्तुम् । मुक्तानन्दस्य सातिशयत्वं वदन् मणिः स्वमतमुच्छिनत्ति । सिद्धिखण्डिते आनन्दतारतम्यवादे च निमज्जति ॥

मणिः (७) पृ — "अत एव 'तस्यैष एव शारीर आत्मा' इत्यानन्दमयस्याप्यान्तरस्य प्रकरणे समाम्नानमुपपद्यते। अन्यथा 'अन्योऽन्तर आत्माऽऽनन्दमयः" इति वाक्यगतेनान्तरपदेनैव विज्ञानमयान्तरत्वमानन्दमयस्यावगम्यते, इति 'तस्यैष एव शारीर आत्मा' इति प्रथमपर्याय इव अन्तिमपर्यायेऽपि वितथमेवापद्यते। अस्मन्मते तु पुच्छवाक्येऽन्तरपदाश्रवणादानन्दमयान्तरत्वं पुच्छब्रह्मणः प्रक्रान्तसर्वान्तरत्वोपपादकं 'तस्यैष एवे' ति वाक्याभावे न सिद्ध्येत् इति।"

उ – 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इत्यस्य वाक्यस्य "तस्य पूर्वस्य विज्ञानमयस्य य आनन्दमयः एष एव शारीर आत्मेत्यनयोर्व्याख्यातः पदार्थः" इति श्रीशंकरानन्दव्याख्येति पूर्वमेवप्रदर्शितम्। "तस्य पूर्वस्य विज्ञानमयस्यैष एव शरीरे भवः शारीर आत्मा। को सौ? य एष आनन्दमयः" इति शांकरभाष्ये श्रुत्यर्थो भाषितः। श्रुतिस्पष्टोक्तमर्थं श्रुत्यर्थत्वेन ऋजुतया भाषित्वा तदनन्तरं श्रुतिर्दूष्यते स्वकल्पितानुपपत्तिहेतुना। यथासूत्राणामन्याय्यत्वं कल्प्यते स्वमतेरेव न्याय्यत्वावलम्बनेन तथैव श्रुतेरप्यन्याय्यत्वं कल्प्यते स्वातन्त्र्यैकरुच्या "आम्नायस्यार्थं प्रतिपत्तु प्रभवामो नाम्नायं पर्यनुयोक्तुम्" इति स्वभाषितं न्यायं वितथीकृत्य। 'तं (आनन्दमयं) प्रतिनास्त्याशंकानास्तित्वे' इति भाषिता युक्तिर्नक्षोदक्षमा। आनन्दपरिपूर्णत्वरूपानन्दमयत्वेन ब्रह्मणोऽस्तित्वानुभवः खलु ब्रह्मास्तित्ववेदनशब्दार्थः श्रुत्याभिप्रेतो मतद्वयरीत्यापीति पूर्वमेव सुविस्तरमुपपादितम्। 'अपोढसर्वविशेषत्वात्तु ब्रह्मणो नास्तित्वं प्रत्याशंका युक्ता' इत्युक्तिरत्यन्तामूला स्वकपोलमात्रकल्पिता, आनन्दादिसूत्र तत्स्वभाष्यव्याहता, कृत्स्नैतदुपनिषद्विरुद्धाच। सर्वोत्कृष्टजीवानन्दादधिको ब्रह्मण आनन्दः, मुक्तस्यानन्दो ब्रह्मानन्दसमः, ब्रह्मनिष्ठया तज्जनितप्रसादहेतुना ब्रह्मप्रवेशे तेन सह तस्य तदानन्दयोगः, ब्रह्महेतुको मुक्तानन्दः, इत्यादिकं खलु सुविस्तरं स्पष्टमुपपाद्यते श्रुत्या सूत्रैश्च। पुच्छवाक्यमिति

पृथग्वाक्यं नैवास्ति । आनन्दमयपर्यायवाक्यमेकमेव । अनन्यात्मत्वोक्तिर्महत्प्रयोजनम् । तद्बोधनमेव बहुश्रुतिरीतिः । भूमविद्यादि दृष्टान्ताः पूर्वं प्रदर्शिताः । एष इति ब्रह्मशब्दपरामर्शानुपपत्तिः स्फुटा । तस्यानन्दमयस्य पूर्वोक्तसर्वान्तरस्यापि पुच्छं (आधारः) प्रतिष्ठा इत्युक्ते ब्रह्मणस्सर्वान्तरत्वस्य सिद्धत्वात् 'तस्यैष एव शारीर आत्मा' इति वाक्यस्य पुनरुक्तता न किम् ॥

मणिः (८) पृ– "'तस्यैष एव शारीर आत्मा' इति वाक्यस्य पूर्वोक्तरीत्या वैयर्थ्यापत्त्यानन्दमयविषयत्वासंभवः पुच्छब्रह्मविषयत्वस्यैव संभवः ।"

उत्तरम्– प्रायपाठः खलु बहुमन्यते मणिना । प्रायपाठेन 'तस्यैष एवे' ति वाक्यस्यानन्दमयविषयत्वं स्फुटीभवति । स्वस्य स्वात्मत्वस्येतरानात्मत्वबोधनं महाप्रयोजनम् । अत्रोक्तं तत् "अनात्म्ये' इति पदमात्रेणानूद्यते उत्तरत्र । आनन्दमयाभिन्नत्वाद्ब्रह्मणः श्लोकादीनां ब्रह्मविषयत्वोक्तिस्सिद्धसाधनमेव ॥

मणिः (८) पृ— शारीरत्वमसंकुचितमन्नमयादिसर्वकोशाधिष्ठानत्वेन पुच्छब्रह्मणोऽपि संभवत्येव ॥"

उत्तरम्– ब्रह्मणोऽसंकोचेन शारीरात्मत्वं नेति को वदति । अस्मन्मतमेव तत् । कृत्स्नजगतश्शरीरिण्येव शारीरात्मशब्दस्याऽसंकुचितवृत्तित्वम् । आत्मशब्दः शरीरिवाची । असंकोचन्यायेन तस्य परमात्मनि निरुपाधिकतया मुख्यत्वम् । अत एव सर्वान्तर्यामिणि विश्वचेतनाचेतनशरीरके आत्मशब्दः प्रायोज्यन्तर्यामिब्राह्मणेन, अत्रापि 'तस्माद्वा एतस्मादात्मनः" इत्युपक्रमे । आकाशशरीरमिति पूर्ववल्ल्यामाकाशादि सर्वशरीरकत्वमुक्तम् । एकस्मिन् शरीरे सर्वकोशाधिष्ठानत्वेनासंकोचन्यायानुरोधकथनं भृत्रमुपहास्यम् । एकशरीरमात्रात्मत्वे

कथमसंकोचः । पुच्छब्रह्मणोऽपि विश्वशारीरत्वसंभवः, इति मण्युक्तिरवितथा । तदेवास्मन्मतसर्वस्वम् ॥

मणिः (८) — "वस्तुतस्तु शरीरमुखेनोपदिश्यमानत्वमेव शारीरत्वमत्र विवक्षणीयं, न तु शरीरित्वं, प्राणमयादीनां शरीरित्वस्य भवन्मतशरीत्या असंभवात् । अतोनानन्दमयः परमात्मा, किन्तु जीव एव ॥

उ — "शरीरेभवश्शारीरः" इत्यत्र भगवत्पादभाष्यम् । सर्वत्र प्रसिद्धोपदेशाधिकरणेपि तथैव भाषितम् । जीवश्शारीर एव भवति, ब्रह्मतु तत्रान्यत्रचेति तत्रोक्तम् । स्वशरीरमात्रापेक्षया शारीरत्वं जीवस्य । सर्वाणि शरीराणि प्रतिशारीरत्वं ब्रह्मणः । 'क्षेत्रज्ञं चापि मांविद्धि सर्वक्षेत्रेषु भारत' इति भगवतेदमेव गीतम् । शारीरत्वपदस्य व्युत्पत्तिर्यथातथावा भवतु, तस्याऽसंकोचवृत्तिः परमात्मन्येवेति श्रुतिस्मृतिसर्वभाष्यसंप्रतिपन्नम् । मणिरपि तथैव वदत्यन्यत्र । आत्मनि जीवे विज्ञानमये योऽन्तरातम शारीरकब्राह्मणादिसर्वोपनिषत्-प्रसिद्धः स सर्वान्तरात्मा । सचात्र विज्ञानमयजीवस्यान्तरात्मा आत्मान्तररहित आनन्दमयः यः स्वस्मिन् (ब्रह्मणि) प्रतिष्ठितः । प्राणमय-मनोमययोरात्मत्वमेव नास्ति । नतरां तयोश्शारीरात्मत्वम् । शारी-रात्मत्वं तयोर्नवयं वदामः । नवामणिमतमेतत् । अस्मन्मतव्याख्या-मन्यथा गृहीत्वा दूषयति मणिः । 'तस्यैष एव शारीर आत्मा' इति पठितेषु सर्ववाक्येषु आनन्दमयश्शारीर आत्मा । विज्ञानमयो यद्यप्यात्मा, तथापि न तस्मिन् शारीरत्वस्यासंकोचवृत्तित्वम् । "तस्मादानन्दमयो जीव एव न ब्रह्म" इति वदता मणिना जीवब्रह्मभेद एव दृढीक्रियतेऽस्मिन् तदभिमतज्ञेयनिर्विशेषप्रकरणे । आनन्दमयाधिकरणस्य स्वोक्तनिर्गुणो-त्सर्गत्वं स्वयमेव हत्वाऽपवादीकरोति इति च सन्तुष्यामः । 'आनन्द-

मयो जीव एवे' ति वदन् मणिः तस्य सगुणेश्वरत्वं प्रतिषेधति । तथा चात्र न सगुणनिर्गुणविषयविचारोवा निर्गुणनिर्णयोवा, यथोक्तं मणिग्रन्था-रम्भे ॥

मणिः (८) — "अत एवान्नमयादीनामिवानन्दमयस्यापि शोद्धव्यत्वश्रवणमुपपद्यते । मतान्तरे तु यत्र शोद्धव्यत्वं प्रसाद्यत्वरूपं विवक्षितं, तत्र नकेवलमर्थवैरूप्यं, किन्तु एकस्यैव शुद्धन्तामिति पदस्य अर्थभेदकल्पनायाऽऽवृत्त्यापत्त्या वाक्यभेदापत्तिरपि, नकेवलमियत्, किन्तु शुद्धन्तां पदस्याऽऽवृत्तस्य प्रसाद्यत्वपरत्वे लक्षणापि ॥"

उत्तरम् – शोध्यत्वस्य पञ्चस्वपि ऐकरूप्यमस्मन्मतरीत्यैवो-पपादयितुं शक्यम् । अन्नमयस्य शरीरस्य शोध्यत्वं स्नानादिशौचैः । न तेषां प्राणविषये मनोविषये विज्ञानमयविषये वासंभवः । प्राणमयस्य शोध्यत्वं प्राणायामादिना भवेत्, न तस्येतरविषयेसंभवः । मनसः शोध्यत्वं प्रत्याहारादिना, नतस्येतरत्र संभवः । जीवस्य शोध्यत्वं ईश्वरज्ञानध्यानादिभिः, नतस्येतरत्र संभवः । "क्षेत्रज्ञस्येश्वरज्ञानाद्वि-शुद्धिः परमामता" इति भगवान् याज्ञवल्क्यः । अत्र मुक्त्युपायत्वेन आनन्दमयब्रह्मणि निरन्तरनिष्ठा उपदिश्यते । ब्रह्मनिष्ठाया निरन्तरत्व-संभवाय, ब्रह्मणः आनन्दमयत्वं प्रियैकस्वभावत्वं, अभ्यासेन च तस्य निरतिशयानन्दत्वस्योत्तरोत्तरानुभवः इत्यादिकमत्रोपदिश्यते । न कर्कश-हठयोगाद्यपेक्षाऽस्ति । योगस्यानन्दमयविषयत्वात् तदभ्यासोप्यानन्द-मयोभवेदिति श्रुत्युपदेशस्सूत्रोपदेशश्च । 'अभ्यासा' दिति सूत्रपदेन आनन्दमयविषयचिन्तासन्तत्यभ्यासेनानन्दमयस्यानन्दपूर्णत्वं स्वानन्द-कार्त्स्न्यानुभावकत्वञ्च स्वयमनुभवगोचरी भवतीत्यपि व्यञ्जयति सूत्रकृत् । "अस्तिब्रह्मेति चेद्वेद, इति श्लोकेनानन्दमयब्रह्मचिन्ताभ्यासेनानन्दमय-परीवाहानुभवो व्यञ्जितः सौत्राभ्यसहेतुना ब्रह्मवेदनस्

प्राचुर्यानुभवोपपादनाय । आनन्दमयविषये तच्छ्लोकपठनेनैतत्स्वारस्य सिद्धिः । सारवद्विश्वतोमुखमानन्दमयसूत्रमानन्दमयपर्यायश्लोकश्च । "इन्द्रियेभ्यः परा" इत्यादिकठश्रुताविवात्रापि वशीकार्यत्वमभिप्रेयते शरीरप्राणमनोविज्ञानमयपरमात्मनाम् । योगानुकूलतया प्रसन्नत्वं प्रार्थ्यते सर्वेषाम् । गीतोक्तकारणपञ्चकस्यापि प्रसन्नत्वं प्रार्थ्यते योग-निर्वाहाय । "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येनमामुपयान्तिते', 'तमेवशरणंगच्छ सर्वभावेन भारत । तत्प्रसादात्परांशान्ति स्थानं प्राप्स्यसि शाश्वतम्" 'मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि' इत्यादि वचनैरीश्वरस्य प्रसाद्यत्वं शास्त्रप्रसिद्धं, भूयिष्ठं लोकप्रसिद्धञ्च । मोक्षानुकूलीभवनमेवास्मदिष्टा शुद्धिः ईप्स्यते । सर्वेषु तद्विरुद्धकालुष्यनिवृत्तिः शुद्धिप्रार्थनया ईप्स्यते । अस्मत्कर्मापेक्षा विषमनिर्घृणा ईश्वरसृष्टिः । अस्मत्कर्म ईश्वरक्रोधकालुष्ये उपाधिः । आहार्यमस्मत्कर्मोपाधिकमस्मद्विषये ईश्वरकालुष्यम् । 'क्रोधमाहारय-त्तीव्रम् ।' औपाधिकस्य तस्य कालुष्यस्यास्मदनुतापशरणागत्यादिना शोध्यत्वं श्रुतिस्मृतिप्रसिद्धं, सर्वास्तिकलोकप्रसिद्धञ्च । ईश्वर प्रसादस्य मोक्षहेतुत्वेन भगवत्पादभाष्यादिसर्वभाष्यप्रसिद्धिः । शुद्धं ब्रह्मनिर्विशेषं, तदितरत् सगुणं ब्रह्म अशुद्धं मायावच्छिन्नमित्यादिकं सततं पदे पदे प्रतिक्षणं वदन्तः ईश्वरे प्राणिदुष्कर्मनिमित्ताप्रियत्वकालुष्य-मीश्वरभजनादिना तस्मिन् तत्कालुष्यशोधनोक्तिञ्च न सहन्ते इत्येतदाश्चर्य-तमम् । न वयं निर्विशेषं ब्रह्म वा तस्य शोध्यत्वं वा वदामः । यस्य शोध्यत्वमस्मदभिमतं न तस्य सगुणेश्वरस्य शोध्यत्वासंभवः परमतेऽपि । रौद्रपदमेवेश्वरवाचकरुद्रपदाद्व्युत्पन्नम् । ब्रह्मप्रसादस्य योगनिर्वर्तकत्वं योगफलमोक्षानन्ददायित्वञ्च सर्ववेदान्तप्रसिद्धम् । प्रसादोक्तिस्तत्प्राग-भावभूतमप्रसादमाक्षिपति । तत्तद्वस्त्वनुरूपशुद्धिप्रार्थनोक्तौ नास्ति वैरूप्यं, नाऽऽवृत्तिर्वाक्यभेदो वा । सर्वेषां शुद्धिरीश्वरादेव प्रार्थ्यते ।

नैकस्मादीश्वराद्बहुफलप्रार्थने वाक्यभेदः । अन्नमयप्राणमयादिशुद्धिः ईश्वरप्रसादाद्भवतु इत्येव प्रार्थ्यते । शुद्धिः कालुष्यनिवृत्तिः, सैव प्रसन्नता । नात्र लक्षणागन्धोऽपि । "प्रसन्नोऽच्छः कलुषोऽनच्छ आविलः", "प्रसादस्तु प्रसन्नता" इति कोशः । "द्वयं नैर्मल्यस्य" इत्यमरसुधा । "प्रणिपातप्रसन्नाहि मैथिली जनकात्मजा" इति सीताविषये ऋषिः । "चित्तं प्रसादयति' इति निद्रागुणवर्णनं चण्डकौशिके । 'परिशुद्धं ब्रह्मैव पुच्छवदधिष्ठानं, न सगुणं ब्रह्म' इति मणिः (९) पृष्ठे निर्विशेषस्यैव परिशुद्धत्वं वदति ॥

मणिः (९) पृष्ठे – "सगुणस्य ब्रह्मणस्स्वरूपत उपादानत्वासंभवान्नतस्य बहुस्यां प्रजायेयेत्युक्त्यन्वयः । शुद्धब्रह्मण एव तत्संभवः । औपाधिकोपादानत्वस्य विवक्षणे चाद्वैतमत एव प्रवेशात् ॥"

उत्तरम् – शरीरद्वारा उपादानत्वं ब्रह्मण इति वयम् । विशिष्टैककारणवादोऽस्मद्वादः । द्वारभूतशरीराणां ब्रह्मप्रकारतया सत्यत्वमस्मन्मते । उपाधीनामसत्यत्वमद्वैते । शुद्धस्य वा सगुणब्रह्मणो वा न स्वरूपोपादानत्वमद्वैते बहुग्रन्थरीत्या, भाष्यरीत्या च । प्रकृतिपर्यायमायोपाधिवैशिष्ट्यद्वारैव तन्मतेऽप्युपादानत्वं भाष्यादिरीत्या । शुद्धस्य मायावच्छेदविरहात्, न तस्याऽद्वारकं वा सद्वारकंत्रोपादानत्वसंभवः । नापि तस्य ज्ञातृत्वशून्यस्य कामयितृत्वरूपसंकल्पयितृत्वसंभवः । सगुणेश्वरस्यैव तत्संभवोऽद्वैतेपि । सर्वथाऽत्र पुच्छब्रह्मणो न निर्विशेषत्वसंभवः । निर्विशेषत्वस्पृहायां न कामयितृत्वतत्पूर्वकस्रष्टृत्वाद्यन्वयः ॥

मणिः (९) पृ — "यथा च पुच्छब्रह्मण एवाज्ञाननिवर्तकवृत्तिविषयत्वमात्रविवक्षाऽभिप्रायेणैव ब्रह्मवेद्यत्वश्रुतीनां, अप्राप्तत्वभ्रमनिवर्तकत्वेन प्राप्तिश्रुतीनाञ्च प्रवृत्तिः ॥"

उ – 'ब्रह्मविदाप्नोति पर' मित्युपक्रमसूत्रम् । तत्र ब्रह्मणो-वेदनकर्मत्वमाप्तिकर्मत्वञ्च स्पष्टं श्रावितम् । अपूर्वार्थबोधकमिदं सूत्रम् । श्रुतस्य वेद्यत्वस्य प्राप्यत्वस्य च परित्यागेऽपूर्वविषये स्पष्टश्रुतार्थपरित्याग आपद्येत । वेद्यत्वप्राप्यत्वे भेदं विना न संभवेताम् । 'न विधौ परश्शब्दार्थः ।' नकेवलं ब्रह्मप्राप्तिः । किन्तु तत्प्राप्तिमहिम्ना तदनुग्रह-हेतुना तेन सह सर्वकामावाप्तिः सर्वलोकानुसञ्चरणादिकञ्च मुक्तानुभाव्यत्वे-नात्रैवोपक्रमब्राह्मणवाक्यादारभ्यस्पष्टं श्राव्येते । 'कर्मकर्तृव्यपदेशाच्च' 'शब्द-विशेषाच्च' इति शाण्डिल्यविद्याविषयसूत्रन्यायोऽत्रापि प्रसरति । 'योवेदब्रह्म सोऽश्नुते सर्वान्कान्सहब्रह्मणा' इति प्रत्यक्षरं वेदितृवेद्यभेदं प्राप्तृप्राप्तव्यभेदञ्च श्रावयति सूत्रव्याख्यानभूतमुपक्रमब्राह्मणवाक्यं यदनूद्यते सूत्रेण मान्त्रवर्णि-कपदस्थमन्त्रवर्णपदेन । 'ब्रह्मविद्ब्रह्मैव भवति' इति न श्रुतिवचनव्यक्तिस्त्र यथा मणिर्वदति । 'ब्रह्मविदाप्नोति पर' मिति तद्व्यक्तिः । यदि 'ब्रह्मवेदब्रह्मैव भवति' इति श्रुतिः चिन्ते क्रियते न तथा भेदनिरासः क्रियते । एवकारस्य इवार्थकत्वस्य श्रुतिप्रसिद्धत्वात्, भवतेः प्राप्त्यर्थ-त्वाच्च । भवतेः प्राप्त्यर्थकत्वमस्ति, नाप्नोतेर्भवत्यर्थकत्वम् । अनन्यथा सिद्धया श्रुत्या खलु भेदनिरास एष्टव्यः । 'यथोदकं शुद्धे शुद्धं आसिक्तं तादृगेव भवति' इति श्रुतिरविभागाधिकरणविषयवाक्यं परभाष्ये । 'तादृगेव भवती' ति सूत्रकाराभिमताऽविभागफलविषयश्रुतिस्तादृग्भवन-मेव मुक्तिरिति निस्सन्दिग्धं सावधारणं वक्ति । 'असन्दिग्धेन हि सन्दि-ग्धस्य निर्णयं न्याय्यं मन्यन्ते ।' इति भगवत्पदप्रदर्शितो न्यायो न तेन वा तदनुयायिभिर्वा विस्मरणीय उल्लंघनीयो वा । मुक्तब्रह्मसाम्यप्रतिज्ञयैवो-परमतिसूत्रशास्त्रम् । ब्रह्मविदो मुक्तान् स्वनिकटं नयतीतिबादरायणः । 'न नयती' ति वदन्तस्तत्प्रतिपक्षिणः एव श्रुतिसूत्रस्पष्टवचनविरोधेन । 'नहि गतमेव गम्यते ।' इति युक्तिमात्रमुपन्यस्यतः कथं प्रामाणिकत्वम् ॥

मणिः (९-१०) – "यो वेद निहितं गुहायां, इत्यादिसन्दर्भेण ज्ञात्र-

भिन्नमेव ज्ञेयं ब्रह्म । 'तत्वमसी' त्यादिवाक्यस्वारस्यादपीति निर्धारितत्वेन भेदप्रतीतिकल्पनाया निर्मूलत्वात् । शरीरवाचकपदानां शरीरिपर्यन्तत्ववादस्य निर्मूलत्वात् ॥"

उत्तरं – स्पष्टश्रुतिविरुद्धं स्पष्टबहुसूत्रविरुद्धं, 'तद्धेतुव्यपदेशाच्च' 'भेदव्यपदेशाच्च' नेतरोऽनुपपत्तेः 'अस्मिन्नस्यचतद्योगम्शास्ति' इत्येतदधिकरणबहुसूत्राक्षरस्पष्टविरुद्धं, अनेकसूत्रस्वभाष्यभाषितविरुद्धं कृत्स्नतैत्तरीयोपनिषद्विरुद्धञ्च स्वमतिमात्रमवलम्ब्यामूलमुच्यते ज्ञात्रभिन्नमेव ज्ञेयं ब्रह्मेति । 'एषह्येवानन्दयति' 'सोकामयत' 'रसंह्येवायं लब्ध्वनन्दीभवति' इत्यादिश्रुती रुदाहृत्य तद्बलेन तद्धेतुव्यपदेशाच्च भेदव्यपदेशाच्च नेतरोऽ नुपपत्तेः कामाच्च नानुमानापेक्षा इति सूत्राणि जीवब्रह्मभेदप्रतिष्ठापकतया व्याख्यतानि पुच्छयोजनायामपि रत्नप्रभानन्दगिरीयादिभिः मणिना च । 'अस्मिन्नस्य' इति चरमसूत्रं जीवपक्षनिराकरणार्थ मित्येवेति मणिकृद्वदति (२९१) प्रश्नोत्तरे । का प्रत्याशाजीवब्रह्माऽभेदवादोच्छ्वसनस्यास्मिन्नधिकरणेऽस्यामानन्दमयविद्यायां वा । यावत्पुच्छभाष्यसूत्रयोजना जीवति तावत्पर्यन्तं न जीवब्रह्माभेदवादस्याऽननप्राणनसंभवः । प्रतिसूत्रं जीवब्रह्मभेदसाधिकया तदभेदनिरासिकया पुच्छपरसूत्रयोजनयाऽस्मत्सिद्धान्तभूतजीवब्रह्मभेदएव अकम्पनीयतया प्रतिष्ठाप्यते परैरपि । आनन्दमयपदस्य जीवसंज्ञात्वकथनेऽपि जीवब्रह्मसाधन निरसनाभ्या मस्मन्मतमेव वस्तुतस्साधितं परैः पुच्छयोजनया । किं वदाम इत्यपरामृश्यैव वादग्रन्थलेखनेऽवतीर्यते पण्डितैरितीदं विस्मयस्थानम् । तत्वमसि वाक्यं पूर्वाधिकरणविचारितसद्विद्यास्थम् । तद्वाक्यतो जीवब्रह्माभेदप्रतीतिर्माभूत्, विज्ञानमयस्य जीवस्य परमात्मा शारीर आत्मा, जीवात्मनस्तच्छरीरस्य स्वप्रकारिभूतपरमात्मपर्यन्तत्वं तत्त्वम्, जीवशब्दस्य तत्प्रतिकारिपर्यन्तवाचकत्वमस्ति इत्यादिकं बोधयितुं सूचयितुं वा इदमधिकरणमारब्धम् । चेतनाचेतनप्रपञ्चस्य शरीरात्मत्वात् ब्रह्मणस्तत्सामानाधिकरण्यम् ।

'भेदव्यपदेशाच्चे' तिसूत्रेणैवदधिकरणेऽभेदपूर्वपक्षो निराक्रियत इति स्पष्टा सौत्री प्रतीतिः । इत्थमेवारंभणाधिकरणे सद्विद्याविचारं कृत्वा कार्यकारणयोरनन्यत्वं प्रतिज्ञाय अनन्तराधिकरणे तत्वमसिवाक्यमवलम्ब्याभेदमाशंक्य 'अधिकन्तु भेदनिर्देशात्' इत्यादिनाऽभेदं निराकृत्य भेदं निर्धारयामास, भेदश्रुतेः प्राबल्यञ्च स्पष्टं निर्णिनाय सूत्रकृत् । आकृत्यधिकरणेनापीयं व्युत्पत्तिस्सिद्ध्यति ॥

मणिः (१० ) पृष्टे – "श्रुतिसूत्रयोर्विरोधे श्रुतेःप्राबल्येन तदनुरोधेन सूत्राणां नेयत्वात्", इति भामतीवाक्यं, यत्र सूत्रगतेन पदेन स्वरसतः कस्य च न निर्णितस्यैव वाक्यस्य प्रतीतिः, कथञ्चन लक्षणयापि सन्दिग्धस्य च वाक्यस्य च प्रतीतिस्तत्र सूत्राणां सन्दिग्धार्थनिर्णयार्थत्वात् लक्षणयापि सन्दिग्धं श्रुतिवाक्यमेव सौत्रेण पदेन विवक्षणीयम् ॥

उत्तरम् – आनन्दमयपदस्य श्रुत्यन्तरे ब्रह्मणि प्रसिद्धिरस्ति । मयटस्स्वरूपार्थकत्वं प्राचुर्यार्थकत्वञ्चास्ति । स्वरूपार्थकत्वे न कस्याप्याक्षेपस्य संभवः । स्वरूपार्थग्रहणे आनन्दमयस्य ब्रह्मत्वं दुरपलापं मणिनापि । अनुशासनसिद्धे तदर्थे न प्रत्ययवैयर्थ्याशंका न्याय्या । प्रसिद्धत्वेन कथितयोर्विकारप्राचुर्ययोर्मयडर्थयोरेवात्र द्वितीयसूत्रेस्पष्टकीर्तनं अन्यतरनिर्णयश्च क्रियते । एतद्विद्यास्थानन्दमयशब्दस्य मयडर्थविचारे भूयांसो ग्रन्था लिख्यन्ते भगवत्पादपुच्छभाष्यप्रवृत्तिकालादारभ्य । तत्पूर्वमानन्दमय एव ब्रह्म सर्वेषां विदुषां सर्वेषामाचार्याणां सर्वेषां सूत्रव्याख्यातॄणां बहुवर्षसहस्रकालम् । आनन्दमयपदस्य जीवविषयत्वस्याविवादत्वं मयटोविकारार्थत्वस्याविवादत्वं च वदन् मिथ्यावादीत्यत्र कस्सन्देहः । कृत्स्नं कूष्माण्डं पत्रपरिवेषितान्नेनाच्छादयिषति मणिकृत् । प्राचीनवृत्तिकाराः, ज्ञानकर्मसमुच्चयवादिनो, भेदाभेदवादिन, इत्याद्यास्सर्वेपि प्राचीनव्याख्यातारः आनन्दमयस्य ब्रह्मत्वं, मयटस्स्वार्थत्वं वा

प्राचुर्यार्थत्वं वा जगृहुः । भगवत्पादमतानुयायिनो वार्तिककारादयः पुच्छभाष्यप्रदर्शितयोजनां निष्करुणं खण्डयित्वा प्राचीनवृत्तिकार-व्याख्यां समर्थयामासुः । भगवत्पादसाक्षाच्छिष्याः अद्वैतसूत्र-वृत्तिकाराः पुच्छभाष्यं परित्यज्य प्राचीनव्याख्यामेव साधुत्वेन परिजगृहुः । अद्वैतिनामेव महतां पुच्छभाष्ययोजनायाः कुमार्गत्वनिश्चये सत्यपि प्राचीनसर्वव्याख्यातृभिरैकरूप्येणानन्दमयस्य ब्रह्मत्वनिर्णये सूत्राणां तत्परत्वोक्तावपि, न कोऽपि सन्देहः कस्यापि आनन्दमयपदार्थविषये, तद्विषये विवादस्याऽसद्भाव इति कथनं मिथ्यैकान्तं प्रत्यक्षापलपनञ्च । सूत्राणां वेदविरुद्धत्वमिति स्पष्टं वदन्ति भामतीकल्पतरुपरिमलाः । अस्मत्कल्पितश्रुत्यर्थानुरोधाय सूत्राणि यथेच्छं पीडयित्वा तत्स्वरसादर्था-त्तान्यन्यथा नेष्यामः इति स्पष्टमुक्तं तैः । सूत्राणां स्पष्टार्थत्वनियमभञ्जने सूत्रत्वमेव हीयेत । सूत्रकारः प्राचीनसंप्रदायः, प्राचीनसर्वव्याख्याः, सर्वेऽपि भ्रान्ताः; स्वशिष्यपरित्यक्ताः स्वव्याख्यातृप्रतिषिद्धाः स्वबह्वुक्ति-व्याहताः, अस्मद्भाष्यकारोक्तय एवाभ्रान्ताः इति वादिनः कथं श्रद्धेयता । विपक्षनाम्ना पक्षं कोवा न्यायसूत्रप्रणेता निर्दिशेत् । स्वविवक्षितब्रह्म-वाचकं पदं खलु प्रयोज्यं निपुणेन । ब्रह्मशब्दः खल्वत्र पक्षत्वेन विवक्षितः पुच्छभाष्येण । ब्रह्मत्वं साध्यत्वेनाभिमतं प्रायेण समन्वयाधि-करणे । अत्र पुच्छपदस्य ब्रह्मवाचकत्वं न साधनीयम् । नापि तस्य प्राधान्यं साधनीयम्, यद्विषये न कोऽपि विप्रतिपद्यते, न कस्यापि सन्देहः । ब्रह्मणो जीवावयवत्वं को वा शंकेत । अवयवत्वस्य कल्पित-तायाः श्रुत्यैव सुस्पष्टमुक्तत्वात्, न तत्कल्पनामवलम्ब्य पूर्वपक्षोत्थिति-संभवः । मणिग्रन्थरीत्यानन्दमयमदस्य जीवपरत्वनियमात्, ब्रह्मणो-जीवावयवत्वशंकायाः अत्यन्तासंभवः । अवयवत्वशंकाया एवानवकाशः । अतः पुच्छभाष्यस्यात्यन्तासंगतता स्फुटा ॥

मणिः (१०) पृ– "अन्यथा 'अत्ताचराचरग्रहणात्' 'सर्वत्र

प्रसिद्धोपदेशात्'., इत्यादौ सर्वं खल्वित्यादीनामेव विषयवाक्यतया ग्रहण-मनुपपन्नं स्यात् ॥"

उत्तरम् – तत्तदधिकरणवाक्यानि सूत्रकारकालादारभ्य तत्प्रवर्तितात् शिष्यप्रशिष्यसंप्रदायादागतानि सूत्रविवरणभूतप्राचीनभाष्यवृत्त्यादि प्रदर्शितानि । अत्र विषयवाक्यमपि सूच्यते पक्षपदेन, अधिकरणसूत्रैश्च । विपक्षस्य खलु पक्षत्वभ्रान्तिरुत्पाद्यते पुच्छभाष्यरीत्या । सर्वत्रेति प्रथमपदेन सर्वमित्यादिवाक्यं तत्स्थसर्वपदञ्च सूच्यते । तदधिकरण-सूत्रैश्च शाण्डिल्यविद्यावाक्यं सूच्यते । 'अत्ता' इति पदेन, 'यस्य ओदने भवतः ।' इति वाक्यं सूच्यते । तदनन्यत्वाधिकरणं द्वितीया-ध्यायस्थम् । कार्यकारणानन्यत्वोपपादकानि वाक्यानि तत्र जिघृक्षितानि । तदुपपादकानि वाक्यानि सर्वाणि सूत्रकृद्बुद्धिस्थान्येव सूत्रपदसूचितान्येव ॥

मणिः ( ११ ) पृ — "ब्रह्मण आनन्दमयावयवत्वकल्पनाया असंभवः ॥"

उत्तरम् – बाढमित्येव वदामः । अत एव तादृशशंकात्यन्ता-नुपपत्तिः । अस्मदनुकूलमेवेदम् ॥

मणिः ( ११ ) पृ – "उपासनार्थतया स्वस्यैव स्वावयवत्वकल्पनं हि ब्रह्मण उपास्यतयैव प्रक्रान्तत्व एव संभवति, न तु ज्ञेयतया प्रक्रान्तत्वे ॥"

उ — ज्ञेयप्रकरणं, उपासनाप्रकरणमिति ब्रह्मविद्याविभजनस्य न श्रुतिसूत्रानुग्रहलेशोऽपि । अस्मिन्नधिकरणे जीवब्रह्मभेद एव बहु-सूत्रसमर्थितः पुच्छभाष्यरीत्यापि । विद्युपस्त्योरेकार्थकत्वमावृत्त्यधिकरण-निर्णीतंभाष्यद्वयरीत्यापि ॥

मणिः ( ११ ) – "यथा च प्रियशिरस्त्वादीनां नानन्दमयावयवत्वे-

नाप्युपास्यतायां तात्पर्यं, तथा तत्रैवाकरे व्यक्तम् ॥"

उत्तरम् – शिरआद्यवयवानामनुपास्यत्वमेव वयं वदामः । प्रियशिरस्त्वसूत्रेण शिर आद्यवयवानां कल्पितत्वं, तेषां ब्रह्मप्रतिपत्तिमात्रोपकारकत्वं, नोपास्याकारसमर्पकत्वमित्येवास्मदर्थः । प्रियशिरस्त्वादीनां काल्पनिकत्वेनानन्दमयविषये पठितत्वात् ब्रह्मणः पुच्छत्वपठनेन न तस्य वस्तुतोऽवयवत्वग्रहणेनाब्रह्मत्वशंकासंभवः । न तरां तस्य ब्रह्मणोजीवत्वेन स्पष्टस्यानन्दमयस्यावयवत्वशंकासंभवः । यत्र न कोऽपि संशयस्यावकाशः, तत्र पूर्वपक्षोवर्ण्यते पुच्छभाष्येण, यस्मिन्विषये परश्शतं बहुवादग्रन्था लिख्यन्ते, यत्र प्राचीनसर्वग्रन्थानामेकरीत्या श्रुतिसूत्रार्थग्रहणमभूत्, यत्रोदंपरतया संप्रदायविरुद्धार्थवर्णनं कृतं पुच्छभाष्येण, तत्र सन्देहस्यैवात्यन्तानवकाश इति वक्ति मणिः । किन्नाधरोत्तरमिदमिति विदांकरोतु सहृदयलोकः ॥

मणिः (१२) पृ – ब्रह्मशब्दाभ्यासस्यैवोपरिदर्शनादानन्दमयाभ्यासादर्शनाच्च पुच्छं ब्रह्मैव तात्पर्यविषय इति सिद्ध्यति ॥

उ – ब्रह्मानन्दमययोरेकत्वमेव । अभ्यासहेतुना पदमात्रमुहुरुक्तिप्रदर्शनोक्तिर्नसंगता असंभवनिराकरणपरे, ब्रह्मणि कारणत्वप्रसिद्धिसंपादनपरेऽस्मिन्पादे इति श्रीभाष्यतट्टीकादिषु सुविशदमुपपादितम् । नाममात्रपुनरुक्तिपरत्वेऽपि हेतोः, ब्रह्मतत्पर्याय शब्दानामभ्यासो हेतुत्वेनोपादीयते मणिप्रदीपादिभिः । पूर्वमीमांसाभिप्रेताविशेषपुनःश्रवणरूपशब्दाभ्यासो नाद्रियते तैः । किमिदं नार्धजरतीयम् । पूर्वमीमांसोक्ताभ्यासः कर्मभेदहेतुः । ब्रह्मानन्दानन्दमयरसशब्दाः पर्याया अत्र । आनन्दमयशब्दस्यात्र प्रकरणेऽभ्यासो नास्तीति कथनंमिथ्या । सर्वान्तरचरमात्मत्वेन द्विरभ्यस्त उत्तरत्रानन्दमयशब्दः । तेन तस्य परमात्मत्वं स्पष्टं सिद्ध्यति । अभ्यासहेतुः नानन्दमयस्य परमात्मत्वव्यावर्तनक्षमः ।

विरुद्ध एव भवेत् स हेतुः आनन्दमयस्यावर्तनोद्यमे ॥

मणिः (१३) पृ – "यथा च ब्रह्मप्राप्तिसाधने ज्ञाने भासमानमुपास्यं वा न प्रियशिरस्त्वादिविशिष्टं' तथा "प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौहि भेदे" इति सूत्रतएव व्यक्तमिति कथमत्रोपक्रमोपसंहारैकरूप्यमपि केवलब्रह्मण उपक्रमः ' प्रियशिरस्त्वादिविशिष्टस्योपसंहार इति तयोर्वैरूप्यात् ॥"

उ — उपक्रमे मध्ये उपसंहारेच निरतिशयानन्दविशिष्ट स्वप्रियभक्ताय स्वकृत्स्नानन्दप्रदजगत्कारणसर्वान्तरात्मा ब्रह्मोपपाद्यते । निर्गुणस्य ब्रह्मणोऽत्र गन्ध एव नास्ति । विज्ञानात्मनो जीवस्याप्यन्तरात्मा सर्वान्तरआत्माऽनन्दपरिपूर्णआनन्दमयइत्युक्त्वा 'ब्रह्मपुच्छ' मितिवाक्यखण्डेन ब्रह्मानन्दमययोरभेदः श्रुत्यभिप्रेतइति 'तदप्येषश्लोको भवती' ति ब्रह्मविषयश्लोकस्यानन्दमयविषयत्वाभिधानेन स्पष्टीचकार श्रुतिः । ब्रह्मणः प्रियशिरस्त्वादिवैशिष्ट्येन भानं वोपास्यत्वं वा न वयं ब्रूमः । भ्रान्तिमूलो मण्याक्षेपः ॥

मणिः (१४) पृ – "नह्यानन्दमये प्रियशिरस्त्वादिविशिष्टे सत्वासत्त्वसन्देहोऽपि सावसरः तस्य वाङ्मनसागोचरत्वायोगात् ॥"

उ – आनन्दमयस्य शिरस्त्वादिविशिष्टत्वं नास्माभिरुच्यते । ब्रह्मप्रतिपत्त्यौपयिकोपलक्षकत्वमेवावयवकल्पनायाः । ब्रह्मणोनिरतिशयानन्दत्वेन ज्ञानानुभवविषयएव अस्तिनास्ती प्रस्तुते असन्नेवेति श्लोके इति पूर्वमेवोपपादितमुत्तरबहुवाक्यबलेन उभयमतग्रन्थावलंबनेन च । मणिरपि तथैव वदति (३७) पृष्ठे इति सन्तुष्यामः ॥

ब्रह्मणआनन्दापरिच्छिन्नत्वविषय एव स्पष्टं मीमांसते श्रुतिः । यत्र मीमांसा सुविस्तरेण क्रियते श्रुत्या तद्विषये संशयाभावं वदन् प्रत्यक्षप्रमाथी पश्यतोहर एव भवेत् । आनन्दमयस्यानन्दस्य वाङ्मनसागोचरत्वमेवात्र मीमांसया श्रुतिर्निश्चिनोति ॥

मणिः – "नहि कस्यापि पर्यायस्य पुच्छवद्विषयकत्वं

उ — इदं न केवलं श्रुत्यपलपनं, किन्तु स्वभाष्याद्यपलपनञ्च । चतुर्णां पर्यायाणां पुच्छवद्विषयत्वमेव स्पष्टं भाषितं शांकरभाष्ये इति पूर्वमेव प्रदर्शितं । "तदप्येषश्लोको भवति' इति प्रतिपर्यायं श्रुत्यैव तत्तच्छ्लोकानामन्नमयादितत्तत्पुच्छवद्विषयत्वं स्पष्टमभिहितम् । "यथा अन्नमयादीनां ब्रह्माणोक्तानां प्रकाशकाः श्लोकाः एवं विज्ञान-मयस्यापि' इत्यादीनि पूर्वोदाहृतस्वभाष्यवाक्यानि दृष्ट्वा श्रुतितद्भाष्याद्यान्ध्यं जहातु मणिकृत् । चक्षुष्मान् बुभूषतु । पूर्वश्लोकानामन्नमयादिपुच्छव-द्विषयत्वस्य श्रुत्या भगवत्पादभाष्येण च स्पष्टाभिहितत्वेन पञ्चमपर्याय श्लोकस्यानन्दमयविषत्वस्य दुरपह्नवत्वसंपत्तिभिया तदपलपनार्थमेव मृषावाद आश्रयणीयो भवति मणिकृतः । स्वमतभूतमृषावादस्येदृशमिथ्योक्तिभिरेव साधनमिष्यतइव । अन्नमयादिचतुर्णां श्लोकास्सन्ति आनन्दमयस्यतु श्लोकोनास्ति इत्युक्तिं कः सहेत । अन्नमयस्य श्लोकाभावे प्रायपाठ-स्तिरस्क्रियेत, प्रक्रमो भज्येत श्लोकस्यानन्दमयविषयत्वाभिधायक-स्पष्टश्रुतिश्चकदर्थ्येत । आनन्दमयब्रह्मणोरेकत्वे आमूलाग्रकृत्स्नश्रुति-स्वारस्यं, सूत्रशास्त्रस्वारस्यं, प्राचीनसंप्रदायानुरोधस्वारस्यञ्च सिद्ध्यन्ति । अन्यच्च । अन्नरसमयशब्दः श्रुतिपठितः । तस्य अन्न-मयइति श्रुत्या भाष्यादिसर्वग्रन्थैश्चानुवादः क्रियते । यथा अन्नमयान्न-रसमयशब्दौ एकार्थौ तथा अन्नान्नमयशब्दौ । इत्थमेव प्राणप्राणमयादि-शब्देषु द्रष्टव्यम् । इत्थमेवानन्दानन्दमयशब्दावेकार्थौ श्रुतिबुद्ध्या । तदप्येषश्लोको भवति' इति श्रुतिवाक्यान्येव श्लोकानां यथासंख्यं अन्नमयाद्यानन्दमयान्तपरत्वं स्पष्टमामनन्ति । भगवत्पादभाष्यमपि तदेव निस्सन्दिग्धं वक्ति । श्रुतिं स्वभाष्यञ्चापलपति मणिकृत् । अस्त्यत्र हेतुः । क इति चेत् श्रुत्या भगवत्पादभाष्येण चान्नान्नमया-

दीनामिव आनन्दानन्दमययोरप्येकार्थत्वसिद्धेरप्रकम्प्यत्वात् पुच्छ-भाष्यस्य मूलोच्छेदो भवति । एतद्भियैव मणिकृदित्थं श्रुतिभाष्या-द्यपलापसाहसे मज्जति । नास्यापलापेन एतच्छ्रुतिभाष्ये असती-भवेताम् । ताभ्यां मणिग्रन्थस्यैव मूलोच्छेदः पुच्छभाष्यस्य च ॥

म — "अन्नमयपर्याय श्लोकोहि" अन्नाद्वैप्रजाः प्रजायन्ते । इत्यन्नमयकारणमात्रमेवोपश्लोकयति ॥

उ — अन्नमयपर्यायइति वदन्मणिः अन्नरसमयस्यान्नमय-शब्देन ग्रहणमिच्छति । इदञ्च नामैकदेशे नामग्रहणन्यायादरणमेव । "अन्नाद्वैप्रजाः प्रजायन्ते" इति भृगुवल्लीश्रुतिव्याख्याने "अद्यते । भुज्यते उपलभ्यते सर्वैरिति सर्वप्रतिपत्तृसाधारणं स्थूलदेहकारणं भूतपञ्चक विराट्संज्ञकमन्नशब्देनोच्यते । तस्य स्थूलभौतिक-कारणत्वात् । 'यतो वा इमानि भूतानि' इति लक्षणस्य तत्र योजयितुं शक्यत्वात् तथा प्रतिपन्नत्वादित्यर्थः" इत्यानन्दगिरिः । "अन्नात् रसादिभावपरिणतात्" "जाताः अन्नेनैव प्राणान् धारयन्ति' 'तस्मात्सर्वौषधं प्राणिनां देहदाहप्रशमनमन्नमुच्यते" इत्यादीन्येत-च्छ्लोकभाष्यवाक्यानि अन्नशब्दस्योदनार्थकत्वमाद्रियन्ते । अन्नमयपदे मयटो विकारार्थकत्वमपीष्टमेवास्माकम् । प्राणमयादिषु मयटः प्राचुर्यमर्थो न विकारः । प्राणमयाद्यानन्दमयान्तेषु मयटस्स्वार्थ-त्वाश्रयणेपि ब्राह्मणस्थप्राणमयादिपदानां श्लोकस्थप्राणादिपदैरेकार्थत्वं सिद्ध्यति । प्राणमयमनोमयविज्ञानमयानन्दमयपदेषु मयटः प्राचुर्यार्थकत्वे भगवत्पादभाष्यादिरीत्यापि श्रुतिप्रसिद्धिः पूर्वमेव प्रदर्शिता । वेदार्थनिर्णये अन्यत्राभ्युपगतश्रुतिप्रसिद्धिरेवादरणीया, सैव संनि-कृष्टतरा । त्रिषु पर्यायेषु विकाररहितेषु एकदेशग्रहणन्यायस्यैवा-दृतत्वात् तस्यैवानुगतत्वेन हेतुत्वम् ॥

मणिः— "एतेन प्राणमयमनोमयविज्ञानमयश्लोका अपि व्याख्याताः, तेषामपि क्रमेण "प्राणंदेवा अनुप्राणन्ति" यतो वाचोनिवर्तन्ते । अप्राप्यमनसा सह", "विज्ञानं यज्ञं तनुते, इति श्लोकेषु मयट्प्रकृत्यर्थ-प्राणमनोविज्ञानविषयत्वस्यैव दर्शनात् ॥

उ — प्राणवृत्तिप्रचुरः प्राणमयः इति भाष्यद्वयसंप्रतिपन्नम् । 'प्राणप्राय' इति शांकरभाष्यम् । श्लोके प्राणशब्देन प्राणवृत्तिप्रचुरः प्राणमयो विवक्षितः । तथैव श्रुतिर्वक्ति, भगवत्पादभाष्यं च भाषते । न तत्र काप्यनुपपत्तिः । प्राणविषयत्वं न प्राणमयविषयत्वं रुन्धे । न प्राणमयः प्राणविकारो वा प्राणकार्यं वा । मनोमयो मनः प्रचुरः । श्लोकस्थमनश्शब्देन मनोमयो विवक्ष्यते । 'तदप्येषश्लोकोभवति' इति श्रुतिस्तत्स्पष्टं वक्ति । शांकरभाष्यञ्च तदेव वक्ति । आनन्दमयब्रह्मणः अपरिच्छिन्नानन्दो मनोमयेनानुभाव्यः इति मनोमयप्रशंसा क्रियते श्लोके । अपरिच्छिन्नानन्दानुभवसाधनस्य प्रशंसा तत्र क्रियते । साधनं प्राप्यमुभयञ्च प्रशस्यते श्लोकेन । अत एव मनोमयानन्दमयोभयविषयेऽपि श्लोकोऽभ्यस्यते । अस्मिन् श्लोके, एतदेकान्तरपर्यायकीर्तयिष्यमाणस्य आनन्दमयब्रह्मणः आनन्दोऽपरिच्छिन्न इति पूर्वमेव विशदीक्रियते । अतोऽप्यानन्दमयनामकीर्तन मयड्बलेन दुःखाल्पत्वशंकोदयात्यन्तानवकाशः । विज्ञानमयशब्दो जीवे प्रसिद्ध इति बहुकृत्वोभाषितं भगवत्पादैः । विज्ञान-श्लोकस्य विज्ञानमयपरत्वं स्पष्टमुक्तं श्रुत्या शांकरभाष्येण च । एतच्छ्लो-कस्थविज्ञानपदस्य जीववाचकत्वं स्पष्टमुक्तं सूत्रकृता कर्तधिकरणगुण-सूत्रेण । अन्तर्यामिश्रुत्या, तदधिकरणसूत्रेण च विज्ञानपदस्य जीव-वाचकत्वसिद्धिः । इत्थं पर्यायेषु मयटः प्राचुर्यं, श्लोकस्थप्राणादिपदानां प्राणमयादिवाचित्वञ्च सुस्फुटम् । एवमेवानन्दमयपर्यायश्लोकस्यापि आनन्दमयविषयत्वमेव । 'तदप्येष श्लोको भवति' इति श्रुतिरेवानन्द-मयविषयत्वमभिधत्ते । तेन च ब्रह्मशब्दस्यानन्दशब्दैकार्थत्वं स्पष्टी-

करोति । श्लोकगतब्रह्मपदसामर्थ्यरूपलिंगादपि 'तदपी' ति आनन्दमय-विषयत्वाभिधायकसावधारणश्रुतेः प्राबल्यम् । आनन्दमयशब्दस्य ब्रह्मणि श्रुत्यन्तरप्रसिद्धेः, न ब्रह्मशब्देनानन्दमयग्रहणविरोधशंकासंभवः । विरोधाभावात् बलाबलविचारस्यानवसरः । अन्नमयादीनां चतुर्णामपि प्रत्येकमुपश्लोकनमस्ति । आनन्दमयस्य पञ्चमस्य श्लोकोनास्तीति मण्युक्तिं को वानुमोदेत । द्वितीयसूत्रे प्राचुर्यादिति पुच्छभाष्ये प्रायपाठस्य हेतूकरणमुपहास्यं भवेत् प्रायपाठानुरोधेनानन्दमयस्यापि कस्यचन श्लोकस्याभावे । 'पर्यायान्तरानुगुण्यार्थ" मिति पर्यायान्त-रानुगुण्यं निर्बध्नता मणिना आनन्दमयविषय एव 'अस्ति ब्रह्मे' ति श्लोकः इत्यवश्यमभ्युपगन्तव्यम् ॥

मणिः (१५) पृ —"पर्यायाणां पुच्छतत्कारणविषयत्वनियम एव श्रुत्याऽवगम्यते, न तु पुच्छवद्विषयकत्वमिति निर्मूलमनुपपन्नञ्च पर्या-याणां पुच्छवद्विषयकत्वदर्शनम् ॥"

उ — अन्नमयपर्याये 'इदं पुच्छ' मिति नाभेरधस्ताद्भागस्य पुच्छत्वमुक्तम् । न तद्विषयः श्लोकः, न वा तत्कारणविषयः । प्राणमयपर्याये पृथिवीपुच्छं । न तद्विषयः, तत्कारणविषयो वा श्लोकः । मनोमये 'अथर्वाङ्गिरसः पुच्छम्' । न तद्विषयस्तत्कारण-विषयो वा श्लोकः । विज्ञानमये महः पुच्छम् । न तद्विषयस्तत्कारण-विषयो वा श्लोकः । मिथ्यैव वदति मणिः पूर्वश्लोकानां पुच्छतत्कारण-विषयत्वं, आनन्दमयविषयश्लोकस्य पुच्छमात्रविषयत्वसमर्थनाय । मिथ्यैकान्तेदृशवादेन किं साध्येत । स्वभाष्यादिविरुद्धेयं मण्युक्तिः । मृषावाद्येव मणिः ॥

मणिः — 'योवेदनिहितं गुहाया' मिति गुहानिहिताभिन्नत्वेन ब्रह्म प्रस्तुतं । गुहानिहितश्च जीवस्वरूपं शरीराद्यात्मवादेन शरीररूपं

प्राणरूपं मनोरूपं विज्ञानरूपं कारणशरीररूपश्चेति अवस्थात्रयपर्यालोचनेन ज्ञायते ॥

उ — गुहा, शरीरस्थहृदयम् । एकगुहाश्रितौ द्वावात्मानौ जीवपराविति सर्वश्रुतिप्रसिद्धम् । गुहासूत्रादिनिर्णीतश्च । 'द्युभ्वाद्यायतनं स्वशब्दात्' इत्यादिसूत्रशांकरभाष्यप्रसिद्धश्च । वेदिता वेद्यमित्युभयं गुहाहितम् । अन्नप्राणमनसां जीवपरमात्मपक्षिद्वयाश्रयनीडत्वं प्रसिद्धम् । वेद्यस्य गुहानिहितत्वमस्त्येव । तथा वेदितापि गुहानिहितः । इमावुभौ विज्ञानमयानन्दमयौ । इतरे अन्नमयाद्यस्त्रशरीरं हृदयगुहा च । पूर्वमेवेदं विस्तरत उपपादितमस्माभिः । गुहाहितात्मद्विके आनन्दमयस्सर्वान्तर आत्मा विज्ञानमयस्य जीवस्याप्यन्तरः । विज्ञानमयस्य कोशत्वं आनन्दमयब्रह्मशरीरत्वेनोपपद्येत । नान्यथा । जीवस्य ब्रह्मशरीरत्वमेव साध्येत, जीवस्यानन्दमयब्रह्मकोशत्वकथनेन । गुहाहितत्वप्रस्तावः जीवब्रह्मभेदस्य विज्ञानमयानन्दमययोर्यथासंख्यं जीवत्वब्रह्मत्वयोश्च साधकः । शरीरस्य प्राणस्य मनसोवा न गुहास्थत्वम् । मनः खलु गुहा । किं लिख्यते इत्यजानन्नेव लिखति मणिकृत् यत्किञ्चिदसम्बद्धम् । कारणशरीरमिति स्वमतपरिभाषा, न प्रसिद्धत्वेनोपन्यासार्हा । आनन्दमयस्य जीवत्वं भूयः शपथ्यते मणिना । अत्र तस्य जडकोशत्वमुच्यते ॥

मणिः — "अन्नमयप्राणमयमनोमयविज्ञानमयै रिवानन्दमयपदेनापि जीवस्यैव विवक्षणेपि विज्ञानमयादिप्रतिपाद्याज्जीवादानन्दमयस्य भेदेऽपि च गुहानिहिताभिन्नं ज्ञेयं नानन्दमयपदार्थः किन्तु पुच्छवाक्यार्थ एव ॥

उ — अन्नमयप्राणमयमनोमयविज्ञानमयानां तद्विशिष्टचित्स्वरूपपरत्वमेवोक्तं भवति मणिनात्र तेषां जीवविवक्षकत्वकथनात् ।

आनन्दमयस्य तत्पदार्थभूतेश्वरत्वमुच्यत इव । मोक्षणसमयमुद्दिश्य भणितेषु "एतमन्नमयमात्मानमुपसंक्रामती" त्यादिवाक्येष्वन्नमयादीना-मन्नमयादिविशिष्टपरमात्मपरत्वं वयं वदामः । हृदयगुहास्थात्मनोर्द्वित्वं तयोरेकस्यानीशत्वमन्यस्येशत्वमित्यादिकं श्रुतिसूत्रसिद्धं नात्यन्तामूलैर्मणि-वाक्यैरपलपितुं शक्यं । विज्ञानमयस्यात्र जीवत्वसंप्रतिपत्तेः तस्यान्तर स्तदन्यः आनन्दपूर्णः आत्मा ब्रह्मैव भवेत् । यथा अन्तर्यामि ब्राह्मणे आत्मनोऽप्यन्तर आत्मा परमात्मैव भवेत् । शारीरकब्राह्मणोक्तमेवा-नयोपनिषदाप्युद्धुष्यते पुनः पुनः "तस्यैष एव शारीर आत्मा" इति । अन्नमयप्राणमयमनोमयानामत्र जीववाचकत्वं न कस्यापि मतम् । कथमेकगुहायामेकस्मिन्काले वर्तमान एक एवात्मा ईशः अनीशश्च दण्डको दण्डघ्नश्च भवेत् । भेदव्यपदेशाच्च इत्येतदधिकरणसूत्रेण "भेदव्यपदेशाच्चान्यः" इत्यनन्तराधिकरणसूत्रेण "नचस्मार्तमतद्धर्माभि-लापाच्छारीरश्च" उभयेपि हि भेदेननमधीयते इत्यन्तर्याम्यधिकरण-सूत्राभ्याञ्चेदमेव सुविशदमुपपादितम् । आनन्दमयपर्यायवाक्यमेकमेवेति पूर्वमेव प्रदर्शितम् ॥

मणिः (१६) पृ — "बुद्ध्युपाधिकस्य स्वप्नावस्थापन्नस्य जीवस्यैव विज्ञानमयपदार्थत्वं न तु बुद्धिमात्रस्येत्येवाद्वैतिभिरपि स्वीकारेण विज्ञानमयात् भेदनिर्देशस्यानन्दमयपरमात्मतासाधकत्वासंभवात् ॥

उ — तत्तसूत्रभाष्ये एतच्छ्रुतिस्थविज्ञानविज्ञानमयशब्दयोर्बुद्धि-परत्वं भाषितम्, जीवपरत्वं च खण्डितम्, "यस्त्वयं व्यपदेशोदर्शितः स बुद्धेरेव कर्तृत्वं प्रापयति, विज्ञानशब्दस्य तत्र प्रसिद्धत्वात्, मनोनन्तरं पाठाच्च । "तस्य श्रद्धैव शिरः" इति च विज्ञानमयस्यात्मनः श्रद्धाद्य-वयवत्वसंकीर्तनात्, श्रद्धादीनाञ्च बुद्धिधर्मत्वप्रसिद्धेः ।" इत्यादि-वाक्यैः । "मनोमयानन्तरं विज्ञानमयोक्तेश्च विज्ञानशब्दस्य बुद्ध्यर्थत्वं

सन्निधेः इत्यानन्दगिरिः । मयटोविकारार्थत्वं खलु भाष्यते पुच्छभाष्ये । विज्ञानमयशब्दस्य विज्ञानविकारः इति खलु तदभिप्रेतार्थः । स्वभाष्याद्युक्तं विज्ञानमयशब्दस्य बुद्धिपरत्वं खण्डयति मणिः, अस्मद्भाष्योक्तं सूत्रकारोक्तञ्च जीवपरत्वं सावधारणं द्रढयतीति सन्तुष्यामः । "श्रद्धाद्यवयवत्वेऽपि कुतो विज्ञानमयस्य बुद्ध्यव्यतिरेकस्तत्राह" इत्यवतारिकां रचयन्नानन्दगिरिः विज्ञानमयस्य बुद्ध्यर्थकत्वमेव निष्कर्षति । अत्र विज्ञानमयपदस्य जीवार्थकत्वस्य मणिनापि सावधारणमर्थान्तरव्यवच्छेदेन दृढीकरणात्, तदन्तरस्य तदन्यस्यानन्दमयस्य ब्रह्मत्वं न कोपि निवारयितुं समर्थः । अस्यामुपनिषदि न स्वप्नस्य वा सुषुप्तेर्वा प्रस्तावगन्धोऽपि । स्वप्नविषयस्स्वप्नो भवतीवात्र मणिकृतः ॥

मणिः (१६) पृ — "अन्यथान्नमयादिवाक्यैरपि जाग्रदाद्यवस्थापन्नजीवस्यैव विवक्षणात् ततो भेदेन निर्देशेन प्राणमयादिरपि परमात्मा स्यात् ॥"

उत्तरम् — अन्नमयस्य शरीरवाचकत्वं भाष्यद्वयरीत्या । "पुरुषः प्रसिद्धः हस्तपादादिमावेन प्रत्यक्षः", "अन्नरसमयात् – अन्नरसविकारात् स्थूलदेहात्" इति श्रीशंकरानन्दाः । स्वमतरीत्यापि नास्य चोद्यस्यावकाशः । अन्नमयादीनां शारीर आत्मा सर्वान्तरः आनन्दमयः परमात्मा इति वयम् । मनोमयपर्यन्तं शरीरगुहे उच्येते । अनन्तरं विज्ञानमयो जीवः ॥

मणिः (१६) पृ — "अयमत्रसूत्रार्थः आनन्दमयपदेनानन्दमयपर्यायो विवक्ष्यते, वाक्यानां ब्रह्मणि समन्वयपरेषु पदार्थनिर्णयस्यानपेक्षत्वात् ॥

उ — स्वभाष्याज्ञानवैपुल्यनिबन्धनमिदं चोद्यमिति पूर्वमेव निरूपितम् । वाक्यानां विषयत्वं न कोपि प्रतिषेधति । वाक्यनिर्दिष्टप्रकरणि-

गाम्नामपि विषयत्वमस्त्येव मतद्वयरीत्यापि ॥

मणिः (१७) पृष्ठे — "प्रकृते तु नानन्दमयपदश्रवणमात्रेण जीव-परमात्मानोरुभयोरपि प्रतीतिः विकारार्थत्वे मयटो जीवस्यैव प्राचुर्यार्थत्वेपि च प्रतीतिः, न ब्रह्मण इति किं जीव एव प्राधान्येन प्रतिपाद्यः, उत स एव ब्रह्माधिष्ठेयतया प्राधान्येन प्रतिपाद्यः इत्येव भवति संशयः ॥

उ — दुःखमयत्वेन प्रसिद्धस्य जीवस्यानन्दमयनाम्ना ग्रहणमेव न संगतम् । विकारार्थत्वमाशंक्य द्वितीयसूत्रे प्रतिषिध्यते । मयडर्थभूत-प्राचुर्यं प्रकरणगतानन्दधर्माभ्यासहेतुना इतरेषां निरतिशयानन्दहेतुना चोपपाद्यते सूत्रकृता । नानन्दमयपदमात्रादेव संशयं ब्रूमः । "तस्यैष एव शारीर आत्मा' इत्यानन्दमयस्य शारीरत्वश्रवणात्, जगत्कारणं च 'तदैक्षतेति' इति श्रुतं ब्रह्मजीवान्नातिरिच्यते । 'तत्त्वमसी' ति कारणतया निर्दिष्टस्य सतो जीवसामानाधिकरण्यनिर्दे-शात्" इति पूर्वपक्षहेतू भाषितौ । पूर्वाधिकरणविषयवाक्यादुत्थिता द्वितीयाशंका ऽस्मिन्नधिकरणे निरस्यते "भेदव्यपदेशाच्च" ति सूत्रेण । अस्यां श्रुतौ 'विज्ञानमयः' इति स्पष्टं गुहास्थजीवात्मानं निर्दिश्य तदन्तर्यामी तदन्यो गुहानिहितः आनन्दमयः परमात्मा इति भेद-व्यपदेशो दृश्यते । तद्बलेनोभयोर्भेदस्समर्थ्यते सूत्रेण । तथा च शास्त्रप्रमुख एव चिदन्तरवैलक्षण्यं बोध्यते परस्य । शास्त्रान्ते च परस्य मुक्तात्मतो वैलक्षण्यं समर्थ्यते जगद्व्यापाराधिकरणेन । [illegible]" ति सूत्रमेव, पूर्वाधिकरणविषयवाक्यादुत्थिता जीवपराभेदशंकेति ज्ञापयति । जन्मादिलक्षणायोगव्यवच्छेदकेऽ [illegible] जीवस्य ब्रह्मणोऽपि प्राधान्यं ब्रह्मणो जीवापेक्षया प्राधान्यमिति विचारस्यैवानवकाशः । जीवोवा तदन्यत् ब्रह्मवात्र कारणत्वेन

प्रतिपाद्यं इत्येवात्र विचारो युक्तः ॥

मणिः — "अत्र मीमांसका एव पूर्वपक्षिणः जीवातिरेकेण कारणस्यानंगीकारात् । वृत्तिकारादयः सिद्धान्तिनः ॥

उ — मीमांसकः पूर्वपक्षीति कस्य मतमिति न ज्ञायते । सेश्वरमीमांसैव जैमिनीयमीमांसेति वयम् । बादरायणस्य हार्दं तदेव । 'परं जैमिनिर्मुख्यत्वात्', 'ब्राह्मेणजैमिनिः', 'साक्षादप्यविरोधं जैमिनिः', इत्यादिसूत्राण्यवधेयानि । नैष्कर्म्यसिद्धिकाराः इदमेव वदन्तीति विमर्शप्रथमभाग एव समर्थितम् । बादरायणो जैमिनिं निरीश्वरवादिनं मन्यते इति कथनं स्पष्टं बाधितं ब्रह्मसूत्राक्षरैः ॥

मणिः — आनन्दमयः प्राधान्येन प्रतिपाद्यः अभ्यस्यमानानन्दवत्त्वात् निगमनश्लोकप्रतिपाद्यत्वाद्वेति पूर्वपक्षरीत्या सूत्रयोजना । अथवा, आनन्दमयः पुच्छब्रह्माधिष्ठेयतयाऽ प्राधान्येनानन्दमयपर्यायप्रतिपाद्यः अभ्यस्यमानब्रह्मशब्दादिघटितवाक्यशेषाविषयत्वात् ॥

उ — कोऽत्र पूर्वपक्षी, किमानन्दमयो जीव इति वा ब्रह्म इति वा तत्पक्षः, इति पृच्छामः । आनन्दमयो ब्रह्मेत्यस्मत्पक्षः । अभ्यस्यमानानन्दवत्वादिति हेतुरस्मदुक्तः । पूर्वपक्षनिरासकस्सूत्रहेतुरिति प्रसिद्धम् । एकएव सौत्रहेतुः पूर्वपक्षरीत्या यत्किञ्चिदर्थकः सिद्धान्तरीत्या तदन्यार्थक इत्युक्तिरुपहास्या । अभ्यासादिति हेतुस्सिद्धान्तहेतुः न पूर्वपक्षहेतुः, यथोच्यते मणिनाऽत्र । सिद्धान्तहेतुत्वेन संप्रतिपन्नोभ्यासहेतुः पूर्वपक्षस्यापि साधारणः इति मणिवदनं चित्रचित्रम् । स्वाभिमतसिद्धान्तरीत्या आनन्दमयपदार्थमेव पक्षीकरोति मणिकृत् यस्मै भृशं चुकोप पूर्वपृष्ठे । नास्त्यवधिः कुवादस्य आत्महननस्य च ॥

मणिः— "अथवा पुच्छब्रह्मप्राधान्येन प्रतिपाद्यं, अभ्यस्यमानत्वात्, अभ्यस्यमानस्यैवहि तात्पर्यविषयत्वेन प्राधान्येन प्रतिपाद्यत्वम्, नानभ्यस्यमानस्य ॥"

उ – पुच्छस्य ब्रह्मणः प्राधान्यसाधनं सिद्धसाधनम् । न कोपि वादी तत्र विप्रतिपद्यते । पुच्छस्य कल्पितत्वस्यैव श्रुत्यैव प्राणमयपर्यायादारभ्य स्पष्टीकृतत्वात्, न तद्बलेनाधिकरणोत्थितिसंभवः । एतादृशविचारः सूत्रशैलीविरुद्धः, प्रियशिरस्त्वादिगुणसूत्रेण पौनरुक्त्यं दुर्निवारम् । अभ्यस्यमानत्वमानन्दमयस्यास्त्येव । श्लोकस्यानन्दमयविषयत्वस्य 'तदपी' ति सप्तम्यर्थकसावधारणश्रुत्यैवाभिहितत्वात्, तदविरोधेन श्लोकस्थब्रह्मशब्दस्यानन्दमयपरत्वमेव ग्राह्यम् । ब्रह्मरसशब्दौ तदभिन्नानन्दमयद्रढयितारौ । न स्पष्टश्रुतिविरोधेन शब्दार्थरूपसामर्थ्यमवलंब्यभेदकल्पनं न्याय्यम् । सौत्राभ्यासहेतोः ब्रह्मैकार्थप्रकरणगतसर्वशब्दपरत्वमभ्युपगम्यते मणिना । रसानन्दशब्दौ यथा ब्रह्मशब्दैकार्थौ मण्यभ्युपगतरीत्या तथात्रानन्दमयशब्दोऽपीति पूर्वमेव निरूपितम् । उत्तरभागे आनन्दमयपरमात्मनस्सर्वान्तरत्वेन प्राप्यपरमात्मत्वेनाभ्यासस्य सत्त्वात् अभ्यासहेतोर्विरुद्धत्वमापद्येत । पदमात्राभ्यासस्य तात्पर्यलिंगत्वं न दृष्टम् । षड्विधतात्पर्यलिंगवर्णने सर्वत्र कस्मिंश्चिदर्थविशेषे वाक्यानि मुहुर्मुहुरुक्तान्येव लिंगत्वेन गृह्यन्ते । पुनरुक्तवाक्यानां शब्दसारूप्यमप्यनपेक्षितम् । अर्थैक्यमेवालम् । अयं लोकन्यायोऽपि । लोकन्यायमूलोऽयं वेदन्यायः ॥

मणिः — "आनन्दमयपर्यायवाक्यशेषेषु "असन्नेव स भवति । असद्ब्रह्मेतिवेदचेत्', 'रसोवैसः', 'यदेष आकाश आनन्दः' इत्यादिषु ब्रह्मणस्समाकर्षो दृश्यते नानन्दमयपदस्य ॥

उ — आन्दमयोरसः । आनन्दमयशब्दस्य ब्रह्मशब्दादपि रस-

शब्देनाधिकस्सन्निकर्षः । 'तदप्येषश्लोको भवति' इति ब्रह्मशब्दघटित श्लोकस्यानन्दमयविषयत्वाभिधानेन श्रुतिः ब्रह्मानन्दमयशब्दौ पर्यायावित्यावगमय्य, तदनन्तरं 'रसोवैसः' 'एष आकाश आनन्दः' इत्यानन्दमयब्रह्मविषये रसानन्दशब्दौ पठति । आनन्दशब्दश्च आनन्दमयस्य संनिकृष्टतरः । तद्गुणसारन्यायः प्रसिद्धो लोकवेदसूत्रेषु सर्वत्र । ब्रह्मण आनन्दमयत्वात् रसानन्दशब्दौ तद्विषये प्रयुज्येते । अन्नप्राणमनोविज्ञानशब्दानां यथाऽन्नमयाद्येकार्थत्वं तथाऽऽनन्दाऽऽनन्दमयशब्दयोरिति श्रुत्याशयस्स्पष्टः प्रायपाठात्, तदप्येष इति श्रुतिवाक्यात्, नामैकदेशग्रहणन्यायात् तद्गुणसारन्यायाच्च । 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति श्लोकोत्तरवाक्ये एष इत्यानन्दमयस्यैव श्लोकोक्तत्वेन समाकर्षः क्रियते श्रुत्येति निरूपितमेव ॥

मणिः ( १८ ) पृ — "अभ्यासोनाम अनन्यपरपुनः श्रवणमेव । यथा 'अहोरमणीया अहोरमणीया', 'तत्त्वमसि, तत्त्वमसि' इति ॥

उ — अत्र लौकिकवैदिकवाक्यान्युदाह्रियन्ते मणिना । न पदमात्राभ्यासस्य तात्पर्यलिंगत्वं हेतूकृतं सूत्रकृता वा, अन्यैर्वा तात्पर्यलिंगोपपादनेषु । अयं लोकन्यायः । यथा लोके तथा वेदे ॥

मणिः — "नह्यत्रवाक्यशेषेषु कुत्राप्यानन्दमयस्य पुनः श्रवणम् । 'आनन्दमयमात्मानमुपसंक्रामति' इति तदपि गतिसापेक्षप्राप्तिरानन्दमयपर्यन्तस्येति सूचनार्थमेव, न तु प्राधान्येन स्वस्वरूपप्रतिपादनार्थम् ॥'

उ – 'एतमानन्दमयमात्मानमुपसंक्रामति इति वाक्यं पठित्वा, सद्य एव 'तदप्येष श्लोकोभवति' इति पठित्वा, आनन्दमयात्मविषय एव 'यतो वाचः' इति श्लोकः पठितः श्रुत्या । तेन च आनन्दमय एव

परमात्मा, स एव प्राप्यः, वाङ्मनसागोचरस्तदानन्दः, स एव ब्रह्मेति च निस्सन्दिग्धं सिद्ध्यति । एतत्स्वारस्यापहृतान्तःकरणाः भगवत्पादाः भाष्यारंभे एव एतं वाक्यमुदाहृत्यानन्दमयस्य परमात्मत्वं सुनिश्चिततया-भाषिषत । आनन्दगिरिणा च तत्स्पष्टमुक्तम् । आनन्दमयस्य संसारि-जीवत्वं पुनःपुनः शपथयति मणिः । जीवस्वरूपस्यार्चिरादिगत्या प्राप्यत्वं वदति मणिरत्र । नूनं वेदान्तिसार्वभौमो मणिकृत् । ईदृशा-चक्करि कस्य वा गौरवं स्यात् ॥

मणिः "अभ्यस्यमानानन्दवत्त्वात् इति अभ्यासादित्यस्यैव लक्षणयार्थान्तरपरत्वं स्वीक्रियते परैः ।"

उ — सूचनात् सूत्रमिति कल्पतरुः । प्रकरणगतानन्दप्राचुर्या-भ्यासः अभ्यासहेतुना सूच्यते । सूत्रसूचितार्थानुसारेण पक्षनिष्ठतया हेतोर्विवरणे अभ्यस्यमानानन्दवत्त्वादित्युच्यते । "आकाशस्तल्लिंगात्' इति सूत्रे 'आकाशः परं ब्रह्म' उपदिश्यमानसर्वभूतकारणत्वात्, सदादिवत् इति तल्लिंगपदसूचितो न्याय इति भावः' इति प्रदीपे मणिकृत् । आनन्द-मयपर्यायगतपुच्छवाक्यं ब्रह्मपरं, अभ्यस्यमानब्रह्मानन्दादिशब्दघटित-वाक्यशेषवत्त्वादिति प्रदीपोक्तः एतत्सूत्रार्थः । किमिदं दूषणनैपुण्यम् । अहो दुर्दशा पाण्डित्यस्य ॥

मणिः — "(अस्मद्भाष्यभाषितसूत्रार्थमनूद्य) तथा सूत्रयोजनं परास्तम् । अभ्यासात् इति सौत्रपदस्यानन्दपदसापेक्षस्यैव हेतु-समर्पकत्वस्वीकारेण न्यायपरे सूत्रे न्यायस्यैव परिपूर्णस्याविवक्षणेन च सूत्रकाराणां न्यायनिर्देशेऽप्यनैपुण्यव्यवस्थापनेन सूत्राशयान्यथाकरणेन स्वकपोलकल्पितार्थमादाय, स्वयमानन्दमयस्यानभ्यस्यमानत्वात्" ॥

उ — इदं दृष्टविपरीतैकान्तम् । सूत्राणां अन्याय्यत्वापादनं,

स्वरसार्थविपरीतमन्यथानयनं प्राचीनसंप्रदायविरुद्धं, सर्वप्रौढविद्वद्भाष्यविरुद्धं, नूतनं स्वकपोलमात्रकल्पितं पुच्छपरयोजनमिति स्पष्टं कथितं भाष्यभामतीकल्पतर्वादिभिः । स्वपक्षस्थानिमान्सर्वान्दोषानस्मद्भाष्योपर्यारोपयितन्नयं मणिकृत 'स्वपक्षस्थान् दोषान् वितथमतिरारोपयति यः । स्वहस्तेनोत्क्षिप्तैः शिरसि निजगात्रेषु बहुलं गलद्भिर्जंबालैर्गगनतलमालिंपति" इति वर्णितदोषे आत्मानं पातयति । अभ्यासशब्दः ससंबन्धिकस्सापेक्ष एव सर्वेषाम् । आनन्दमय इति सन्निकृष्टसूत्रपदादेव साकांक्षा पूर्यते, आनन्दस्याभ्यासात्, आनन्दमयत्वस्य निरवधिकत्वबोधकस्य 'यतो वाच' इति श्लोकस्याभ्यासादिति इत्यपि वयं योजयामः । आनन्दाभ्यासोपि हेतूक्रियते पुच्छयोजनायाम् । आनन्दाभ्यासादिति पुच्छपक्षसंप्रतिपन्नहेतुपदे आनन्दपदस्य धर्मपरत्वञ्च वयं वर्णयामः । तच्च प्रकरणे दृष्टम् । प्रकरणादेवाभ्यासशब्दस्याकांक्षापूरणं क्रियते । न केवलेनाभ्यासशब्देन हेतुस्समर्प्येत । प्रकरणात् पूरिताकांक्ष एव अभ्यासशब्दो हेतुसमर्पणक्षमः । स्वयमानन्दमयस्यानभ्यस्यमानत्वादिति मण्युक्तिरत्यन्तमिथ्या । आनन्दमयशब्दः सर्वान्तरपरमात्मपरत्वेन द्विरभ्यस्तः उत्तरत्र वल्लीद्वये । आनन्दमयत्वरूपानन्दप्राचुर्यस्य निरवधिकत्वं ब्रह्मधर्मकत्वञ्च शब्दतो द्विरभ्यस्तं 'यतो वाच' इति श्लोकेन । तच्छ्लोकस्यानन्दमयात्मविषयत्वञ्च स्पष्टं ज्ञापितं श्रुत्यैव 'तदप्येष श्लोकः' इति । वल्ल्यन्तदृष्टतद्वाक्येन श्लोकपठितब्रह्मण एवानन्दमयत्वमकम्पनीयतया सिद्ध्यति ॥

मणिः – "यथा च ब्रह्मरूपस्यानन्दस्यैव "यतो वाचो निवर्तन्ते' इति द्विरभ्यासः, न तु ब्रह्मधर्मस्यानन्दस्य, तथा पूर्वमेव विवेचितम् । "उदरमन्तरं कुरुते' इत्यादीनामन्यथानुपपत्तेः । तथा च वाङ्मनसागोचरत्वेनाभ्यस्यमानानन्दाश्रयत्वमप्यसिद्धमेव । न हि शतगुणितप्राजापत्यानन्दः ब्रह्मधर्मः आनन्दो वाङ्मनसागोचरः । तदियत्ताया

श्रुत्यैवावधारितत्वात् ॥"

उ – 'आनन्दं ब्रह्मणो विद्वान्' इति श्रुत्या मीमांसितप्रकृतानन्दस्य ब्रह्माश्रितत्वतद्धर्मत्वे स्पष्टमुक्ते । तद्विरोधेन मणिकृता कृतं आनन्दस्य ब्रह्मधर्मत्वनिषेधं कः श्रद्धास्यति । आनन्दस्य ब्रह्मधर्मत्वे गतिसामान्यं सर्वश्रुतीनाम् । "सुखविशिष्टाभिधानादेव च" इति सूत्रं मणिं मूकीकर्तुमलम् । "कं ब्रह्म खं ब्रह्म', 'एष आकाश आनन्दः" इति श्रुत्योरेकार्थत्वं स्पष्टम् । ब्रह्मशब्दाभ्यासं हेतूकुर्वन् मणिकृत् "स एको ब्रह्मण आनन्दः" इत्यत्र ब्रह्मशब्दस्याब्रह्मपरत्वकथनेन स्वाभिमतहेतुमेव वितथयति । ब्रह्मशब्दोऽस्मिन्प्रकरणे एकरूपतया परब्रह्मवाचक इति वर्णनमेव स्वरसम् । तत्रापि 'ब्रह्मण आनन्दः, इति अस्मिन् प्रकरणे द्विः पठितयोः पदयोरैकरूप्येणैवार्थो वर्णनीयः । प्राजापत्यानन्दात् ब्रह्मानन्दस्य शतगुणितत्वोक्तिर्न तावत्परिमाणपरिच्छेदतात्पर्यका इति पूर्वमेवोपपादिम् । 'यावान्वायमाकाशः' इति दहरश्रुत्या श्रुतिवर्णनरीतिरीदृशीति स्पष्टीकृतम् ॥

मणिः — "वस्तुतस्तु शतगुणप्राजापत्यानन्दाश्रयत्वं सगुण इव जीवस्याप्यविशिष्टमेव, 'श्रोत्रियस्य चाकामहतस्य' इति प्राजापत्यानन्दात् शतगुणस्यानन्दस्याकामहतश्रोत्रियजीवसाधारण्यस्य तत्रैव प्रतिपादनात्" ॥

उ — 'स एको ब्रह्मण आनन्दः', 'आनन्दं ब्रह्मणो विद्वान्' इत्येतत्प्रकरणस्थवाक्यद्वयेपि 'ब्रह्मण' इति षष्ठ्यन्तपदस्यानन्दाश्रयत्वेन पठितस्यैकरूप्येण परब्रह्मवाचकत्वमेव ग्राह्यम् । "श्रोत्रियोऽ वृजिनो अकामहतः" इति समानप्रकरणे बृहदारण्यके श्रावितम् । अवृजिनो अपहतपाप्मा । आविर्भूतस्वरूपो मुक्त एवात्र 'श्रोत्रियोऽकामहत'

इति वर्ण्यते । "मुक्तः प्रतिज्ञानात्', 'आत्मा प्रकरणात्' इति सूत्रयोः "य आत्मा अपहतपाप्मा विजरो विमृत्युः' इति विषयवाक्यम् । तच्छ्रुत्युक्तं ब्राह्मरूपमाविर्भवति मुक्तस्य । अकामहतत्वञ्चास्मिन्नेव संभवति । ब्रह्मानन्दे, तत्तुल्ये मुक्तानन्दे च सर्वोत्कृष्टानन्दानामन्तर्भावः खलूपपिपादयिषितः श्रुत्या 'मुक्तः सर्वान्कामानश्नुते' इत्युपक्रमोक्तस्य निर्वाहाय । 'ब्रह्मणा सह' इति तत्र स्पष्टोक्तं साहित्यं श्रुत्यन्तरप्रसिद्धं साम्यञ्च निगद्यते "स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य' इति । ब्रह्मानन्दपर्यायात्प्राचीनेषु पर्यायेषु अकामहत, श्रोत्रियस्यापि तत्तदानन्दवत्त्वोक्तिः 'सर्वान्कामान्समश्नुते' इत्युपक्रमोक्तस्य सर्वानन्दानुभवस्योपपादनाय । न हिरण्यगर्भः सगुणेश्वरः । "हिरण्यगर्भोनाम-मूर्तित्रयादन्यः प्रथमो जीवः" इति वेदान्तपरिभाषा । "समष्टिलिंग-शरीराभिमानिन एव हिरण्यगर्भत्वात्' इति तस्य मणिकृद्व्याख्या ॥

मणिः (१९) पृ — "आनन्दमयो न ब्रह्म, अनभ्यासात् इति सत्प्रतिपक्षोपि भवति ॥"

उ — आनन्दमयपदमात्रस्य पुनः पुनरुक्तिं अभ्यासहेत्वर्थत्वेन गृहीत्वेदमुच्यते मणिना । अस्मत्सूत्रार्थो न यथावद्गृहीतो मणिना । आनन्दमयपदमात्राभ्यासोऽप्यस्त्येवेति निरूपितम् । आनन्दपदस्यानन्द-मयपदैकार्थत्वञ्चोपपादितम् । ब्रह्मरसानन्दानन्दमयपदानामेकार्थत्वञ्च निरूपितम् । आनन्दमयपदस्यैव सर्वान्तरपरमात्मपरत्वेनाभ्यस्तत्वात्, विरुद्धोऽनभ्यासहेतुः ॥

मणिः – "एतेन बाधोपि व्याख्यातः । विकारस्य प्राचुर्यस्य वा मयडर्थत्वे पूर्वोक्तरीत्यानन्दमयस्य ब्रह्मत्वासंभवात् ॥"

उ – इद पूर्वमेव विस्तरशो निरस्तम् ॥

मणिः – "अत्र सूत्रे आनन्दमयपक्षकः तत्पर्यायगतपुच्छब्रह्मपक्षकश्च द्वौ न्यायौ विवक्षितौ। प्रथमे 'ईक्षतेर्नाशब्द' मित्यतो नञनुकर्षणेन आनन्दमयो न ब्रह्म अभ्यासात् इति योजना। द्वितीये तु पुच्छं ब्रह्मैव जिज्ञास्यं अभ्यासस्य मानसत्वादिति योजना॥

उ — आनन्दमयो ब्रह्मेति परममाङ्गलिकं सूत्रपठनम्। ब्रह्म-पदमुपलक्ष्यते आनन्दमयपदेने' ति वदन्तो भाष्यभामत्यादयः ब्रह्मपदेन (ब्रह्मपदघटितवाक्यं) पक्षीचक्रुः, न पुच्छपदम्। स्वप्रधानतया विवक्षितत्वञ्च साध्यम् तेषाञ्च। सूत्रं तत्याज भाष्यम्। भामती-कल्पतरु-आनन्दगिरिः रामानन्दश्च। तान्सर्वान् तत्यजुः अर्वाचीनाः। अहो, उत्तरोत्तरं पूर्वपूर्वग्रन्थत्यागपरंपरा। विचित्रोऽयं संप्रदायः॥

मणिः — "अपराण्यपि सूत्राणि यथासंभवं पुच्छवाक्य-निर्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्यानि' इति वदन्तः प्रथमसूत्र-स्वारस्यमद्वैतमते एव, न मतान्तरे, द्वितीयसूत्रे विकारादिशब्देन कस्य ग्रहणमिति शंकायां पुच्छादिपदेनेत्यादिविवरणमूहनीयं स्फुटत्वादिति न विवरणापेक्षेत्येव मन्यते, न तु सूत्राणां प्रतीयमानार्थविरोधेनान्यार्थतया विवरणं यथासंभवं स्वयमूहनीयं मन्यते॥

उ — 'सूत्राणि तु' इति भाष्यवाक्यस्य वेदसूत्रविरोधाभ्युप-गन्तृत्वमेवार्थः इति भामतीरत्नप्रभादीनां व्याख्या स्पष्टा। "वेद-सूत्रयोर्विरोधे गुणे त्वन्याय्यकल्पनेति सूत्राण्यन्यथा नेतव्यानीत्याह —" इति रत्नप्रभावतारिका 'सूत्राणि त्वि' ति भाष्यखण्डस्य। भामतीव्याख्यापि तथैव। अन्यथा शब्दस्य प्रतीयमानार्थादन्यथेत्येव स्पष्टोऽर्थः। प्रतीयमानार्थविरुद्धार्थग्रहणे मार्गोऽप्युपदिष्टः कल्पतरुणा "अध्या-हारादिभिर्नेयानि" इति। अध्याहारादिभिरित्यत्र "आदिशब्देन

लक्षणा, अनुषङ्गो, योगवृत्तिश्च गृह्यते। तत्र सौत्रानन्दमयशब्दस्यानन्दमयपर्यायाम्नाते पुच्छब्रह्मणि लक्षणा। स्वप्राधान्येन प्रतिपाद्यमिति (साध्यस्य) अध्याहारः। अस्मिन्नेव स भवतीति निगमनश्लोकाभ्यासविषयत्वादिति हेतुः" इति परिमलविवरणं कल्पतरुप्रयुक्तादिशब्दस्य। आनन्दमयशब्दस्य जीववाचित्वे, स्वाभिमतपक्षशब्दस्य तद्वैपरीत्येन नियमो व्याहतः ॥

उ — इदं श्रुतिबाधितं, स्वभाष्यबाधितञ्च ॥

तत्प्रतिपक्षब्रह्मोपलक्षकत्ववर्णनं प्रतीयमानविपरीतमन्यथा वर्णनं वा न वेत्यत्र सहृदयमनः साक्षित्वेन वृणीमहे। सूत्राणां वेदविरुद्धत्वं स्पष्टमभ्युपगम्यते आर्जवशीलैः शाठ्यरहितैः प्राचीनैः ॥

मणिः (२०) — "सूत्राणां तत्तत्सूत्रविवरणावसरे सन्दिग्धान्येव तत्तत्सूत्रसंबन्धयोग्यानि वाक्यानि ग्राह्याणि ॥

उ — आनन्दमयपदार्थविषये संशय एव नास्ति, सर्वेषां तत्र संप्रतिपत्तिरेवेति वदन् प्रत्यक्षापलापी न श्रद्धेयवचनः। एतद्विषये एव शतशो ग्रन्था लिख्यन्ते। आनन्दमयस्य ब्रह्मत्वमेव निर्धारितं प्राचीनैः सर्वैर्व्याख्यातृभिः तद्विषये पूर्वपक्षसिद्धान्तवर्णनेन, सूत्राक्षराणां स्वरसार्थवर्णनेन च ॥

मणिः — "लोके येष्वर्थेषु यानि पदानि प्रसिद्धानि तानि सति संभवे तदर्थान्येव सूत्रेष्ववगन्तव्यानि, नाध्याहारादिभिरेषामर्थः परिकल्पनीयः परिभाषितव्यो वा" इति वदन्तः शबरस्वामिनोपि यदि प्रतीयमानार्थग्रहणमसंभवि तर्हि प्रतीयमानार्थस्य परित्यागेनापि अध्याहारादिभिरर्थान्तरपरिकल्पनमावश्यकं मन्यन्ते" ॥

उ — अनुल्लंघनीयः शबरस्वाम्युक्त उत्सर्गः अगतिकगत्याश्रयणस्यात्रानवसर एव। लोके वेदे वा आनन्दमयपदमानन्दमयपदमेव

भवेत्, नान्यत् । आनन्दमयपदं खलु पक्षवाचिपदं सूत्रे । तस्य तदितरत्वं, तद्विरुद्धवाचित्वं कदापि केनापि वक्तुं न शक्यम् ॥

मणिः — "आनन्दमयपदे पक्षनिर्देशके अन्यथानयने मतद्वयेपि समानमेव, पर्यायविवक्षया आवश्यकत्वात्, अभ्यासादिति हेतोरन्यथा नयनन्त्वनावश्यकमयोग्यञ्च पूर्वोक्तरीत्या" ॥

उत्तरम् — अत्र स्वयोजनायां आनन्दमयपदस्य स्पष्टं पक्ष-निर्देशकत्वेऽपि तस्यान्यथानयनं स्पष्टमभ्युपगम्यते मणिनाऽपि अस्माकमानन्दमय एव पक्षः तस्य ब्रह्मेतरत्वनिरसनपूर्वकं ब्रह्मत्वं साध्यते । यथाकाशाद्यधिकरणेषु ॥

मणिः — "अत्र हि प्रकरणेऽन्नमयादिपर्यायेषु श्लोकेषु अन्नादिषु ब्रह्मोपासनाविधाने तात्पर्यं न तथा आनन्दमयपर्यायश्लोके आनन्दस्य ब्रह्मरूपेणोपास्यता प्रतीयते" ॥

उ — 'ब्रह्मवित्', 'यो वेद निहितं गुहाया' मित्यारंभ एव ब्रह्मोपासनविधानं सूचितम् । तस्य आनन्दमयसंज्ञां, विश्वस्य शारीरात्मत्वं, सर्वजीवानन्दहेतुत्वमित्यादिकमुपपाद्य तस्मिन्निष्ठारूपं तदुपासनं "यदा ह्येवैष एतस्मि" न्निति वाक्येन विहितमित्यादिकं पूर्वमेवोपपादितम् । आनन्दमयविद्याप्रतिपाद्यब्रह्मणः आनन्दादिधर्म-विशिष्टत्वं, एतद्विद्यातः इतरब्रह्मविद्यासु आनन्दादिगुणोपसंहारं च स्पष्टं सूत्रयति सूत्रकारः आनन्दाद्यधिकरणे । अन्नमयपर्याये अब्रह्मणि ब्रह्मदृष्ट्या प्रतीकोपासनमुक्तम् । तथा प्राणमयपर्यायेऽपि । आनन्दमयस्य ब्रह्मत्वात्, पूर्वमेव ब्रह्मोपासनस्य 'ब्रह्मविदाप्नोति परं', 'यो वेद निहितं' इत्यादिना विहितत्वात्, 'यदा ह्येव एतस्मिन्' इति तदुपासनस्य निरन्तरनिष्ठारूपत्वस्य वक्ष्यमाणत्वात् नानन्दमयपर्याय-

वाक्ये तदुपासनविधानस्यावश्यकता । न प्रतिवाक्यमुपासनविधानं कर्तव्यम् । आवृत्त्यधिकरणेन वेदनस्योपासनत्वं निर्णीतम् । कात्र निर्गुणप्रत्याशा । आनन्दमयस्यैव ब्रह्मत्वात् तस्य ब्रह्मत्वेनोपासनविधानस्यासंभवः स्फुटः । प्रायपाठानुरोधेन तस्मिन् ब्रह्मबुद्ध्युपदेशाभावादेवानन्दमयस्य ब्रह्मत्वं [illegible] "

मणिः (२१) पृ — "अत एव भृगुवल्ल्यामपि "आनन्दो ब्रह्मेति व्यजानात्" इति, मयट्परित्यागेनानन्दपदमात्रस्य प्रयोग उपपद्यते" ॥

उ — यथा आनन्दवल्ल्यामन्नमयादिपदानां स्थाने तत्तच्छ्लोकेषु अन्नादिमयड्रहितपदानि प्रयुक्तानि श्रुत्या तथा भृगुवल्ल्यामपि अन्नमयादिपदस्थानेषु अन्नादिपदानि प्रयुक्तानि । नामैकदेशे नामग्रहणन्याय आदृत इव श्रुत्या । सर्वथा श्लोकोक्तानामन्नादीनां तत्तन्मयविषयत्वस्य स्पष्टमुक्तत्वात् मयडन्तत्वमयड्रहितत्वाभ्यां न कोपि भेदः श्रुतिबुद्ध्येति सुस्पष्टम् । आनन्दमयविषयश्लोके आनन्दपदापठने कारणं पूर्वमेव प्रदर्शितम् । अत्र भृगुवल्ल्यां न तत्कारणमस्ति । तद्गुणसारसूत्रन्याये नानन्दव्यपदेशः सारभूतानन्दगुणवैशिष्ट्यबुबोधयित्वा । भृगुप्राप्यपरब्रह्मणः आनन्दमयनामैव पठितं "आनन्दमयमात्मानमुपसंक्रम्य" इति ॥

मणिः — "अनेन चानन्दरूपेणाज्ञानं संसारनिमित्तं, तद्रूपेण ब्रह्मणो ज्ञानमेव मुक्तिसाधनमित्यपि ज्ञाप्यते" ॥

उ — आनन्दरूपत्वं नाम निरतिशयानन्दप्रचुरानन्दमयरूपत्वम् । उक्तानन्दमयरूपत्वेन ब्रह्मवेदनमेव 'अस्ति ब्रह्मे' ति श्लोकोक्तमित्यसकृदुक्तमस्माभिः । अस्मदुक्तमेव मणिनाप्युच्यते । अन्यथा मण्युक्त्या पुच्छभाष्यभाषिता सार्वलौकिकप्रसिद्धिर्निरस्यते ॥

मणिः — "प्रियशिरस्त्वादिविशिष्टोपासनमेव मोक्षसाधन वादो निर्मूल एव" ॥

उ — इदमाकाशमुष्टिहननायितम् । आनन्दमयोपासनस्य प्रियशिरस्त्वादिविशिष्टत्वं न वयं वदामः । उपासने शिरआद्यवयव-राहित्यमेव सूत्रकृन्मतमस्मन्मतञ्च ॥

मणिः — "वस्तुगतिमनुसृत्य सर्वेषां पर्यायाणां पुच्छवद्विषयकत्व-नियमो व्याहतः" ॥

उ — इदं श्रुतिबाधितं, स्वभाष्यबाधितञ्च ॥

मणिः — "अस्तु वा पुच्छवद्विषयकत्वं पर्यायाणां तुष्यतु दुर्जनन्यायेन, तथापि नेदं नियतं, मनोमयपर्यायस्य पुच्छवद्-विषयकत्वात्" ॥

उ — स्वभाष्यकारेणापि श्लोकानामन्नमयादिविषयकत्वस्यैव कण्ठोक्तवात्, श्रुतिवाक्यैरपि स्पष्टोक्तत्वाच्च, मण्युक्तः तुष्यतु दुर्जन-न्यायः श्रुत्युपरि स्वभाष्यकारोपरि च प्रयुज्यते क्रोधवशमापन्नेन मणिकृता । "क्रुद्धो हन्याद्गुरूनपि" इति वचनस्य निदर्शनमस्मत्सुहृत् । अस्मदुपरि कोपः उत्थितः, स्वगुरुर्हन्यते ॥

मणिः — "मनोमयपर्यायस्य पुच्छवदविषयकत्वात् । न हि मनसो ब्रह्मज्ञानसाधनत्वेन स्तूयमानस्य ब्रह्मरूपेणोपदेशोपि प्राणादि-विज्ञानानामिव दृश्यते ॥

उ — ब्रह्मज्ञानसाधनत्वोक्तिरेवोत्कृष्टा स्तुतिः । अस्माकं तत्साधकत्वेन गुरवो ब्रह्मणोऽपि गरीयस्त्वेन पूज्यन्ते । मनो ब्रह्मेति प्रतीकोपासनोपदेशो न मोक्षसाधकः । विशुद्धमनसो मोक्षानन्दसाधनत्वं

खलु श्लोकाभिप्रेतम् । मनसो ब्रह्मप्रतीकत्वेनोपासने न तत्साधनं भवेत् । अत एव तदनुक्तिः श्लोके ॥

मणिः — "अतो निगमनश्लोकवाक्यप्रकृत्यर्थब्रह्मोपासनापरत्व-नियमो मनोमयपर्याये व्यभिचरत्येव" ॥

उ – नास्माभिरेतादृशनियमः कुत्राप्युक्तः, अनुक्तोपालंभोऽयम् । स्वबुद्ध्या कश्चिन्नियममस्मदुक्तत्वेन मिथ्यैव कल्पयित्वा दूष्यते अनृतरुच्या ॥

मणिः — "एतेन मनोमयपर्यायश्लोकस्यापि साक्षादेव पुच्छव-द्विषयकत्वसत्त्वेन तादृशनियमोपपत्तिरिति परास्तम्" ॥

उ — सूत्रभूतोपक्रमब्राह्मणवाक्योक्ता वाङ्मनसागोचरब्रह्मानन्द-प्राप्तिः मनोमयेन खलु साध्येति स्तुत्यत्वकाष्ठा मनोमयस्य । "नान्यः पन्था विद्यते" इति मोक्षसाधनब्रह्मज्ञानस्तुतिरिवात्र साधनस्य स्तुतिः । साधनत्वेन मनसस्स्तुतिस्साक्षादेव क्रियते । "वायुर्वै क्षेपिष्ठा" इति गुणभूतोद्देश्यदेवतायाः स्तुतिः किं साक्षान्न क्रियते । अन्नमयप्राणमय-मनोमयपर्यायश्लोकेषु ब्रह्मणोप्युक्त्या श्लोकानां नाऽन्नमयप्राणमयादि-प्रकाशकत्वहानिः ॥

मणिः — "यथा कथञ्चिन्मनोमयपरामर्शमात्रविवक्षायां तु "असन्नेव स भवति" इति निगमनश्लोकेऽपि स इति तच्छब्देनानन्दमय-परामर्शसंभवात् साक्षात्पुच्छवद्विषयकत्वमानन्दमयपर्याय एव संभवति, न पर्यायान्तरेषु, तेषां कारणपरामर्शविधयैव पुच्छवद्विषयकत्वेन साक्षात्पुच्छवद्विषयकत्वादर्शनात्" ॥

उ — पुच्छवन्तः अन्नमयाद्यानन्दमयान्ताः । श्रुत्या शांकर-भाष्येण च श्लोकानामन्नमयाद्युपश्लोकनपरत्वमुक्तमिति पूर्वमेव

निरूपितम् । श्रुतिस्वभाष्यविरोधेन इत्थं मणिवदनमनादरणीयमेव । विस्तरेणास्माभिरस्योत्तरं दत्तं पूर्वमेव । "असन्नेव स भवति" इति निन्दावाक्यस्योपश्लोकनत्ववर्णनमुपहास्यम् । सर्वपर्यायश्लोकेषु वेदनोपासनकर्ता नान्नमयादिः पुच्छवान्, किन्तु अधिकारी साधको जीवः । अत्रापि स एव निर्दिश्यते 'सः' इति । यत्तच्छब्दाभ्यां श्लोकेषु निर्दिष्टः सर्वपर्यायसाधारणः अधिकारी मुमुक्षुर्जीवः । नान्नमयप्राणमयमनोमयाश्चेतनाः । अत्र श्लोकस्य साक्षादानन्दमयविषयत्वं सिषाधयिषति मणिकृदिति सन्तुष्यामः ॥

मणिः ( २१ — २२ ) — "यथा च मनोमयपर्याये ' यतोवाचो निवर्तन्ते । अप्राप्य मनसा सह " इति पूर्वभागेन मनसो ब्रह्मण्यवृत्ति प्रतिपादनेन निन्दायामपि विद्वानित्यनेन विशुद्धेन मनसेत्यध्याहारेण मनसः प्रशंसा उत्तरवाक्येनावगम्यते, एवमानन्दमयपर्यायश्लोके अपि "असन्नेव स भवति" इति पूर्वभागेनानन्दमयस्य निन्दायामपि "सन्तमेनं ततोविदुरि" ति पाश्चात्यभागेनानन्दमयस्यैव साक्षात् प्रशंसा अवगम्यते इति सर्वात्मना साम्यं मनोमयपर्यायश्लोकेनानन्दमयपर्याय श्लोकस्य" ॥

उ — मणिपूर्ववाक्ये पर्यायद्वयश्लोकयोरत्यन्तवैषम्यं शपथितम् । अत्रोभयोस्सर्वात्मना साम्यमुच्यते । "असन्नेव स भवति" इति पूर्वार्धेऽब्रह्मविदो निन्दा, उत्तरार्धे ब्रह्मविदः प्रशंसा क्रियते । नोभयोरेकविषयत्वम् । न गर्हणीयो नास्तिकः आनन्दमय इति व्यपदिश्येत श्रुत्या । अनेनापि स इत्यस्यानन्दमयविषयत्वासंभवः स्फुटीभवति । मनोमयविषयश्लोकपूर्वार्धे ब्रह्मानन्दस्याऽपरिच्छेद्यत्वरूपणाय वाङ्मनसागोचरत्वमुक्तम् । अपरिच्छेद्यत्वं ब्रह्मानन्दस्वभावः । अनन्तस्य तस्य न परिच्छेदसंभवः । अनन्तस्यानन्दस्य परिच्छेदा-

शक्तिर्ब्रह्मणोऽपि समाना । तदशक्त्या न कस्यापि निन्दा भवेत् । वस्तुस्वभावस्य दुरतिक्रमतायाः सर्वसंमतत्वात् । अपरिच्छेद्यस्यापि कथञ्चिद्वेदने मनसस्साधनत्वमिति श्लोकस्य मनसः प्रशंसायामेव तात्पर्यं, न निन्दायाम् "

मणिः (२२ — २३) — "वस्तुतस्तु नानन्दमयस्य पूर्वोक्तरीत्या श्लोकप्रतिपाद्यत्वम् ॥ "

उ इदं "तदप्येष श्लोको भवति" इति श्लोकपूर्ववाक्येन, "तस्यैष एव शारीर आत्मा । यः पूर्वस्य" इति श्लोकोत्तरवाक्येन च परास्तम् । अन्नमयादीनां श्लोकसत्त्वे, आनन्दमयविषयेणापि केनचिच्छ्लोकेनावश्यं भाव्यं प्रायपाठहेतुना, यो हेतूक्रियते 'प्राचुर्यात्' इति द्वितीयसूत्रे पुच्छयोजनायाम् । प्रायपाठस्यानादरणे तस्य तत्र हेतूकरणं न न्याय्यं भवेत् ॥

मणिः — "आनन्दमयस्य ब्रह्मकार्यस्याब्रह्मत्वात्, नानन्दमयस्य श्लोकप्रतिपाद्यत्वम् ॥ "

उ — असिद्धेनासिद्धस्य साधनमिदम् । श्रुत्यैव श्लोकस्यानन्दमयविषयत्वस्य स्पष्टोक्तत्वात्, "तस्यैष एव" इति तस्यैव श्लोकोत्तरवाक्ये परामर्शात् श्लोकपठितब्रह्मैवानन्दमयः इति निश्चप्रचम् ॥

मणिः — 'तथा चानन्दमयस्य मुख्यप्राधान्याभावे श्लोकमुख्यतात्पर्यविषयत्वाभावस्यैव हेतुतयाऽत्र विवक्षणात्, मनोमयादौ हेतुसाध्ययोरप्यभावेन न मनोमयादौ व्यभिचारः" ॥

उ — दुरवबोधा मण्युक्तिः । गहने प्रतिष्ठितो मणिः । असन्नेवेति श्लोके मुख्यामुख्यतात्पर्यत्वेन विषयभेदकल्पनायाः नैवावकाशः ।

आनन्दमयाभिन्नं ब्रह्मैकमेव तन्मुख्यविषयः । "मनोमयादौ" इत्यादि-पदेन किं किं गृह्यत इति पृच्छामः ॥

मणिः -- २४ पृ -- "ब्रह्मण एव प्राधान्यमप्राधान्यञ्चोभयं स्यादिति विरोधः ॥"

उ — ब्रह्मणोऽवयवत्वे नैव तात्पर्यं श्रुतेः । अवयवावयविभावस्य केवलं कल्पनैव इति श्रुत्यैव स्पष्टीकृतं, सर्वसंप्रतिपन्नं च ॥

मणिः — "तस्यैष एव शारीर आत्मा यः पूर्वस्य' इत्यानन्द-मयस्यान्यात्मान्तरस्यात्रोपदेशेनानन्दमयस्याब्रह्मत्वाच्च" ॥

उ — परमतग्रन्थरीत्याऽस्य वाक्यस्यार्थः पूर्वमेव प्रदर्शितः । 'पूर्वस्य विज्ञानमयस्य यः आत्मा आनन्दमयः, तस्यैव आनन्दमय एव शारीर आत्मा' इति संप्रतिपन्नः शब्दार्थः । एतद्वल्ल्यन्ते, भृगुवल्ल्यन्ते च आनन्दमयात्मोपसंक्रमणोक्त्यनन्तरं नात्मान्तरं कीर्तितम् । आनन्दमये एवान्तरात्मपरम्परा तत्र पर्यवसितेति स्फुटम् । तद्वदत्रापि नानन्दमयादन्तरः कोप्यात्मा उक्तः । अन्तर्यामिब्राह्मणरीत्या विज्ञानशब्दाभिलप्य विज्ञानमयजीवान्तर आत्मा परमात्मैव । "तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति वाक्यस्य न ब्रह्मणः आनन्दमयान्त-रात्मवर्णनमर्थः अद्वैतग्रन्थेषु । आनन्दमयस्यान्तरात्मा ब्रह्मेति केनापि श्रुतिवाक्येन नोक्तमित्येव सर्वाद्वैतग्रन्थसंप्रतिपत्तिः । पुच्छभाष्ये 'यद्यप्यन्न-मयादिभ्य इव आनन्दमयादन्योन्तर आत्मेति न श्रूयते' इति स्पष्टं आनन्दमयादन्यान्तरात्मप्रतिपादकं श्रुतिवाक्यं नास्तीत्यभ्युपगतम् । 'तदप्येष श्लोको भवति' इति श्लोकपूर्ववाक्यस्य वा, 'तस्यैष एव' इति श्लोकानन्तरवाक्यस्य वा न पुच्छब्रह्मविषयत्वं भगवत्पादबुद्ध्या । आनन्दमयविषयत्वमेव तयोस्तद्बुद्ध्या । "आनन्दमयस्य चान्तरत्व-मन्नमयादिकोशापेक्षया, ब्रह्मणस्त्वान्तरत्वमानन्दमयापेक्षयेत्यर्थाद्गम्यते

इति न श्रुत्योक्त' इति भाष्यकारहृदयत्वेन स्वप्रतिभामात्रेण विवृतं भामत्या । आनन्दमयादन्तर आत्मा न श्रुत्योक्तः इति भामती भाष्यं विवृणोति । तस्यार्थिकीप्रतिपत्तिर्गम्या, नशाब्दमभिधानमिति स्पष्टमुक्तम् । "आनन्दमयस्य कोशस्यैवेतरकोशापेक्षयाऽन्तरत्वं चेत् तर्हि ततोऽभ्यन्तरं ब्रह्म किमिति नोक्तमत्राह – ब्रह्मणस्त्विति । अर्थात् – प्रतिष्ठात्वसामर्थ्यादित्यर्थः" इति प्रकृतभामतीव्याख्याभूतकल्पतरुग्रन्थोऽपि श्रुतिवाक्याभावं स्पष्टं वदति । श्लोकपूर्वोत्तरवाक्याभ्यामेतस्य मणिग्रन्थे शब्दप्रतिपादनकथनं सर्वाद्वैतग्रन्थविरुद्धं, श्रुतिवाक्यबाधितञ्च । "ब्रह्मणः सर्वान्तरत्वप्रदर्शनार्थं खल्वन्नमयादुत्तरोत्तरनिरूपणं प्रवृत्तम् । तच्चेदानन्दमये पर्यवसितं स एव ब्रह्मेति युक्तं, ततोऽप्यन्तरं ब्रह्म विवक्षितं चेत्, तथा किमिति नोच्यते । न हि ब्रह्मणस्सर्वान्तरत्वप्रदर्शनार्थं प्रक्रान्तं तदब्रह्मणिपरिसमापितं युज्यत इति भावः" इति भाष्योद्भावितशङ्का चारु विवृता परिमले । प्रतिष्ठापदेनार्थतः अन्तरात्मान्तरमुक्तमिति कल्पतरूक्तसमाधिरसमाधिरेव । श्लोकपूर्वोत्तरवाक्ययोः आनन्दमयविषयत्वस्य संप्रतिपन्नत्वात् स्पष्टत्वाच्च ब्रह्मानन्दमयशब्दयोरेकार्थत्वमेव सिद्ध्यति । आनन्दमयस्य ब्रह्मप्रतिष्ठत्वं स्वप्रतिष्ठत्वमेवेति "तस्यैष एव शारीर आत्मा' इति श्रुत्यैव स्पष्टं विवृतम् । न प्रत्यक्षशब्दस्पष्टाभिहितार्थविरुद्धार्थकल्पनस्य संभवः । ब्रह्मानन्दमययोरेकत्वसिद्धौ आनन्दमयस्य ब्रह्म प्रतिष्ठेत्युक्त्या स्वप्रतिष्ठितत्वमेवोक्तं भवति । भूमविद्यायामित्थमुक्तिः पूर्वमेव निदर्शिता । प्रतिष्ठोक्तिरन्यथा सिद्धा । स्वप्रतिष्ठिततत्वस्य श्रुत्यन्तरप्रसिद्धत्वात् । उत्तरत्रापि द्विः आनन्दमयस्यैव सर्वान्तरात्मत्वं स्पष्टमुक्तं श्रुत्या । तत्रानन्दमयादन्तरस्यान्यस्यार्थतस्सिद्धिरपि न वक्तुं शक्या नवा उच्यते । इत्थं त्रिः आनन्दमयस्य सर्वान्तरपरमात्मत्वमभ्यस्यते श्रुत्या । अभ्यासहेतुनाऽयमभ्यासोऽप्यभिप्रयते । कल्पतरूक्तरीत्या सूत्राणां बह्वर्थसूचनस्या-

अलङ्कारत्वम् । विश्वतोमुखत्वं सूत्रलक्षणम् । यदि तु सत्यं ज्ञान-मनन्तं इति मन्त्रे सत्यादिलक्षणं ब्रह्म गुहायां निहितं जीवरूपेण गुहाया-मीश्वरेण निवेशितं जीवाभिन्नं वेदेति जीवस्य गुहानिहितत्वमुक्तमिति तद्विवरणार्थं तत्प्रवृत्तं भवेत्, तदा तत्पर्यवसानमानन्दमय एव युक्तमिति न काचिदनुपपत्तिः" इति परिमले, आनन्दमये पर्यवसानं स्वमतिकल्पितं जीवब्रह्माभेदमाश्रित्य समर्थितम् । सर्वथानन्दमयस्य सर्वान्तरात्मत्वं श्रुतिस्वारस्यसिद्धमिति ज्ञात्वा अत्यन्तासिद्धस्वाभिमत-जीवब्रह्माभेदबलेनानन्दमयस्य श्रुतिस्पष्टोक्तसर्वान्तरात्मत्वं समर्थयितु-मिच्छति परिमलः । मोघैव तदिच्छा ! आनन्दमयशब्दस्य ब्रह्म-शब्दस्य चैकार्थत्वेनोभयोरैक्येन वयमानन्दमयस्य परमात्मत्वं कथयामः । एतदुक्तिस्पष्टविरुद्धं स्वमतिमात्रेण जीवब्रह्माभेदाश्रयणेन आनन्द-मयस्य परमात्मत्वं वर्णयति परिमलः । सर्वथाऽऽनन्दमयस्य सर्वान्तर-परमात्मत्वमेव श्रुत्यभिहितमिति परिमलहृदयमपि । इत्थञ्चानन्द-मयस्यान्तर आत्मा न कोप्यभिहितः श्रुत्येति सर्वग्रन्थसंप्रतिपन्नम् । विज्ञानमयस्य जीवत्वात् तदन्तर आत्मा आनन्दमयः पर एव । अन्तर्या-म्यधिकरणसूत्राणि स्मर्तव्यानि ॥

मणिः २४ – २५ – पृ — "पुच्छवाक्यं प्राधान्येन न ब्रह्मपरं ब्रह्मणोऽप्राधान्योपपादकावयववाचिपुच्छशब्दत्वादिति चेत् न पुच्छपदस्य पर्यायान्तरेषु सर्वत्र दर्शनेनात्रापि पर्यायान्तर इव तत्पदप्रयोगेऽपि तस्या-धारलक्षकत्वेनावयवाबोधकत्वात्' ॥

उ — 'पुच्छशब्दादवयवत्वेनेति प्राप्ते उच्यते – आनन्दमयो-भ्यासात्' । ब्रह्मपुच्छं प्रतिष्ठेति स्वप्रधानमेव ब्रह्मोच्यते (नानन्दमया-वयवत्वेन) अभ्यासात्, निगमनश्लोके केवलस्यैव ब्रह्मणः अभ्यस्य-मानत्वात्'' इति पूर्वसूत्रव्याख्यापुच्छभाष्ये, अवयवशब्दभूतपुच्छपदबलेनैव

तत्र प्रथमसूत्र एव शङ्का उद्भाव्य अभ्यासहेतुना प्रत्युक्ता । अस्मिन् द्वितीयसूत्रे प्राचुर्यादिति हेतुखण्डस्य पूर्वानुक्तहेत्वन्तरपरत्वमेव वक्तव्यम् । न पूर्वसूत्रप्रत्युक्तशंकाया अत्र 'विकारशब्दान्नेति चेत्' इति तद्वाचकशब्देन पुनर्वचनस्यापेक्षा । आनन्दमयपर्यायगत 'ब्रह्मपुच्छं प्रतिष्ठे' ति वाक्यपठितं ब्रह्म पक्षत्वेन भाष्यनिर्दिष्टम् । पुच्छरूपावयवत्वेन निर्देश एव प्रथमसूत्रेपि पूर्वपक्षहेतुः । आनन्दमयावयवत्वेन वा स्वप्रधानत्वेन वेति प्रथमसूत्रशंकाशिरसी । विकारशब्दस्यावयववाचित्वं नेति स्पष्टं, सर्वसंप्रतिपन्नं च । सिद्धसाधने स्पष्टसाधने च मज्जति पुच्छभाष्यम । सौत्रपक्षभूतानन्दमयशब्दावयवभूतमयडर्थयोः स्पष्टकीर्तनं अस्त्यस्मिन्सूत्रे । उभयोरन्यतरनिर्णिनीषास्ति । निर्णयश्चक्रियते । मयडर्थविशेषविचारेऽस्त्यपेक्षाऽत्र । भूयांसं तद्विषय एव कलहं पश्यामः । अवयवत्वशंका मन्दा । अपेक्षितस्याकरणं, अनपेक्षितस्यकरणञ्च दोषावहम् । 'पुच्छशब्दस्य सर्वपर्यायेषु, अभ्यासादिति' पूर्वसूत्राभ्यासहेतुनैवास्य हेतोस्संग्रहः सुवचः । सर्वथास्य सूत्रस्य वैयर्थ्यमेव भवेत् । विकारशब्दस्य भाष्यकारादिप्राचीनानुक्तं, अत्यन्ताप्रसिद्धमतिक्लिष्टं नूतनं न्यायरक्षामण्युक्तनैरर्थक्यपरत्वं नूनं रसिकविद्वदुपहास्यं, स्पष्टत्वासन्दिग्धत्वरूपसूत्रनियमव्यापादकम् सूत्रकृद्यशोमालिन्यावहञ्च ॥

मणिः ( २५ - २६ ) पृ — "अत्र ( स एको ब्रह्मण आनन्दः इति वाक्ये ) ब्रह्मपदेनानन्दमयो विवक्ष्यते इति मतद्वयसंप्रतिपन्नम् ॥"

उ — आनन्दवल्लीवाक्येऽस्मिन् ब्रह्मानन्दमयपदयोः पर्यायत्वमभिप्रेयते । आनन्दमयपर्यायवाक्येपि तयोः पर्यायत्ववर्णनं स्वरसम् । अनेन च ब्रह्मानन्दमयशब्दयोः पर्यायत्वाभ्युपगमेन प्रायपाठानुसारेण 'तदप्येष श्लोको भवति' इति श्रुतिस्पष्टवचनानुसारेण च श्लोकस्थब्रह्म-

पदस्य आनन्दमयैकार्थ्यस्य सुदृढसिद्धिः । अस्मिन्वाक्ये यथाषष्ठ्यन्त- आनन्दमयपरः तथैव तत्सन्निकृष्टश्लोकस्थषष्ठ्यन्त-ब्रह्मशब्दोऽपि ॥

म ( २६ ) पृ — ( उक्तवाक्ये ) ब्रह्म हिरण्यगर्भः । "आनन्दमय-मात्मानमित्यत्रोक्तः आनन्दमयो हिरण्यगर्भः । उपसंक्रमणशब्दोक्ता गतिः गतिपूर्वकप्राप्तिश्च तस्यैव ॥

उ – अस्यामुपनिषदि ब्रह्मशब्दः परब्रह्मवाचकः । ब्रह्मशब्दाभ्यासं परब्रह्मसाधकत्वेनाश्रयद्भिस्तथैवाभ्युपगन्तव्यम् । अस्यामेवानन्दमीमांसा-यामुच्यते 'आनन्दं ब्रह्मणः' इति । तत्रानन्दधर्मिवाचकस्य षष्ठ्यन्तब्रह्म-शब्दस्य परब्रह्मपरत्वं संप्रतिपन्नम् । तस्य श्लोकस्यानन्दमयात्मविषयत्वं श्रुत्यैवोक्तं 'तदप्येष श्लोको भवति' इति । यथा तच्छ्लोके, तथात्र षष्ठ्यन्तब्रह्मशब्दस्य परब्रह्मपरत्वमेव । बादरिपक्षस्य पूर्वपक्षत्वं स्फुटम् । जैमिनिपक्षस्य पूर्वोक्तबादरिपक्षनिरस्यत्वे इष्टे तत्पक्षस्य पुनरुपन्यासेनाधिकरणोपसंहारः कृतः स्यात् । जैमिनिपक्षोपन्यासानन्तरं तत्खण्डनपरसूत्राप्रणयनञ्च बादरिपक्षस्य पूर्वपक्षतांस्थिरयति । ऋषिद्वय-मतमुपन्यस्य एतदधिकरण एव स्वमतं स्वनामकीर्तनपूर्वकं स्पष्टं प्रदर्शयामास सूत्रकृत अप्रतीकालंबनसूत्रेण इति स्वरसस्वरसा सूत्राक्षर-गतिः । जैमिनिमतस्य तन्मतोपन्यासानन्तरं केनचित्सूत्रेणाखण्डना-त्तस्यैव सिद्धान्तत्वं व्यासपक्षत्वञ्च ग्राह्यमित्यस्मदुक्तदूषणस्याप्रति-समाधेयतां पश्यन्तः श्रीब्रह्मानन्दाः शास्त्रमुक्तावल्यां 'न च कार्ये प्रत्यभिसन्धिः' इति सूत्रेनजातत्पूर्वोपन्यस्तजैमिनिपक्षप्रतिषेधः क्रियत इति व्याख्यां नूतनांदर्शयामासुः । तेनापि अद्वैतभाष्यव्याख्यानस्यास्वरसता स्फुटीभवति । न हिरण्यगर्भः सगुणब्रह्म । "आदिक्षेत्रज्ञस्य हिरण्य-गर्भस्योभयभावनान्वितस्य मुक्तप्राप्यत्वायोगात्, मुक्तस्य तत्पारतन्त्र्या

18

योगाच्च" इति श्रुतप्रकाशिका । 'कार्यमेव सगुणंब्रह्म अमानवोनयति' इति कार्यसूत्रशांकरभाष्यम् । सगुणब्रह्मणो जीवत्ववर्णनं सर्वाद्वैत-ग्रन्थविरुद्धम् । सगुणं ब्रह्मैव निर्गुणमिति खलु भूय उच्यते मणिकृता । ब्रह्मजिज्ञासासूत्रे ब्रह्मशब्दस्य सगुणनिर्गुणोभयार्थकत्वं वर्ण्यते मणिकृता बहुत्र । "स एको ब्रह्मण आनन्दः' इत्यत्रोक्तब्रह्मणः सगुणत्वमिष्टमेवास्माकम् । न तस्य जीवत्वम् । आनन्दमयस्य स-गुणब्रह्मत्वमेव वयं वदामः । तदभ्युपगमे न प्रतिवादित्वम् । "त्रीन् लोकान् संपरिक्रम्यापि" लक्ष्मणमार्गः शरणीकरणीयो भवति ॥

म — (२६) पृ — "आनन्दमयशब्देन ब्रह्मण एव विवक्षणे शतगुणोत्तरानन्दमीमांसायां, प्रतिमीमांसमकामहतश्रोत्रियस्यापि निर्देशः अनुपपन्नः स्यात्' ॥

उ — 'सोश्नुते सर्वान् कामान्' इत्युपक्रमे मन्त्रवर्णे सर्वोत्कृष्टा-नन्दानां मुक्तानन्दे अन्तर्भावः, उक्तः । तत्तदुत्कृष्टानन्दानुपर्युपरि शतगुणितोत्तरक्रमेण निर्दिशन्तीश्रुतिः तत्तदुत्कृष्टानन्दवत्वमकामहतमुक्त-जीवस्यापि अस्तीति वक्ति । तस्यानन्दस्य तत्तदुत्कृष्टानन्दादपि शत-गुणत्वबोधनेन च सर्वोत्कृष्टानन्दानां मुक्तानन्दे एकदेशतयाऽन्तर्भावं व्यनक्ति मन्त्रवर्णे स्वाभिप्रेतं मुक्तब्रह्मानन्दसाम्यं सर्वोत्कृष्टतदानन्दस्य मुक्तौ ब्रह्मणासमत्वेन सहानुभवश्च स्पष्टं कथयति "स एको ब्रह्मणः आनन्दः श्रोत्रियस्यचाकामहतस्य" इति । ब्रह्मण आनन्दः इत्युक्त्यनन्तरं गुणनाभावादेव न ततोऽधिक आनन्दोऽस्तीति स्फुटीकृतम् । सर्वोत्कृष्ट-जीवभूतप्रजापत्यानन्दशतगुणितत्वोक्त्या संभावनीयपरिच्छेद्यत्वशंका वार्यते 'यतोवाचः' इति श्लोकेन । तच्छ्लोक्तानन्दः 'स एको ब्रह्मणः आनन्दः' इति वाक्योक्तब्रह्मणः एवेति स्पष्टयितुं 'ब्रह्मण आनन्दः' इति पूर्वोक्तात्यन्तसरूपनिर्देशमकरोत् श्लोके । अ[illegible]

ब्रह्म प्रथमोक्तानन्दमय एवेति स्पष्टयितुं 'एतमानन्दमयमात्मानमुपसंक्रामति' इति चरमप्राप्यचरमात्मत्वमानन्दमयस्य विशदीकृत्य, 'तदप्येष श्लोको भवति' इति सुस्पष्टं निस्सन्दिग्धं श्लोकस्यानन्दमयब्रह्मविषयत्वं स्फुटीचक्रे । ईदृशास्पष्टश्रुतिबहुवचनविरोधेन, मण्युक्तयुक्तयाभासा अपसार्यन्ते । असत्य एव ता युक्त यो भवन्ति, असदानन्दमयं ब्रह्मेति वदनात् ॥

मणिः ( २७ ) पृ — 'हिरण्यगर्भान्तस्य सर्वस्य प्रचुरानन्दस्य यादृशं प्राचुर्यं, तादृशमकामहतश्रोत्रियस्येत्यस्य प्रसिद्धस्य जीवस्यापि वर्तत एव । तथा च न केवलं सुषुप्तजीवस्य किन्तु जाग्रतोऽप्यकामहतस्यानन्दमयत्वमिति बोधनार्थमीमांसा" ॥

उ — "नास्यामुपनिषदि अवस्थात्रयप्रस्तावगन्धोऽप्यस्ति । मणिकृतः स्वप्नावस्थावर्तते ध्रुवम् । न जाग्रत् कश्चिदित्थममूलं वदेत् । श्रोत्रियोब्रह्मविद्याश्रवणमननिदिध्यासनादिभिरकामहतोमुक्तो भवति । जीवन्नेव स मुक्त इति मणिमतम् । श्रोत्रियाणां संसारिणां चतुर्मुखानन्दवत्त्वं प्रसिद्धमिति वदति मणिकृत् । तत्स्वानुभवसिद्धं किं मणिकृतः । सा च प्रसिद्धिः स्वाप्निक्येव भवेत् । अमुक्तस्य, अब्रह्मक्रतोः छन्दोध्ययनमात्रवतः अवृजिनत्वाऽकामहतत्वानुपपत्तिः स्फुटा । मणिकृदभिमतश्रोत्रियाणां हिरण्यगर्भानन्दकामहतत्वमेव कथितं भवति तेन । तत्क्रतुन्यायेन हिरण्यगर्भानन्दप्राप्तिस्तत्कामस्य तत्क्रतोरेवभवेत् । श्रोत्रियाणां संसारिणां चतुर्मुखानन्दवत्त्वमसंभवि । समानप्रकरणे बृहदारण्यके 'अवृजिनः' इति श्रोत्रियविशेषणात्, अपहतपाप्मा मुक्तः श्रोत्रियशब्देन श्रुत्यभिप्रेतः इति स्पष्टं प्रतीयते । अनेन च ब्रह्मानन्दसममुक्तानन्दे सर्वोत्कृष्टानन्दानामन्तर्भावः श्रुत्यानन्दमीमांसयोपपाद्यते "सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा" इत्युपक्रमोक्तमुक्तब्रह्मभोगसाहित्यसाम्यसमर्थनायेति सुस्पष्टं भवति । अत्रैव तत्रापि 'प्रजापतिलोके आनन्दः' इति श्रुतौ

प्रजापतिशब्दः चतुर्मुखपरः । उभयश्रुत्यैकार्थ्यात् । तत्र प्रजापतिलोकानन्दोपरि अथ येशतं प्रजापतिलोके आनन्दाः स एको ब्रह्मलोक आनन्दः यश्च श्रोत्रियो वृजिनोऽकामहतोऽथैष एव परम आनन्दः एष ब्रह्मलोकस्सम्राडिति होवाच" इत्युक्तोब्रह्मलोक आनन्दः परब्रह्मानन्द एवेति निस्सन्दिग्धं स्पष्टीकृतं श्रुत्या । "एष एव परमानन्दः एष ब्रह्मलोकः" इति पूर्वोक्तब्रह्मलोक एव एष इति परामृष्ट इति स्पष्टीकृतं पुनस्तद्विषय एव ब्रह्मलोकसंज्ञायाः पठनेन, 'एष एव' इति सावधारणोक्त्या, एष ब्रह्मलोकः' इति पुनरेषशब्दपठनेन पूर्वोक्तब्रह्मलोकशब्दाभ्यासद्वारा तस्मिन् तात्पर्यातिशय प्रकाशनेन, उपक्रमोपसंहारयोः ब्रह्मलोकशब्दपठनात्, उभयोराभिरूप्येण च । 'अथयदतः परोदिवीज्योतिर्दीप्यते' इति ज्योतिर्वाक्यविषयज्योतिरधिकरणमिह भाव्यम् । एष शब्देन ब्रह्मलोकशब्देन च तत्प्रत्यभिज्ञासिद्धिः । अवृजिनस्य अपहतपाप्मनो मुक्तस्यानन्देऽपि उत्तरोत्तरोत्कृष्टजीवानन्दान्तर्भावप्रदर्शनपरत्वमस्य प्रकरणस्य दुरपह्नवं यथा तैत्तरीयानन्दमीमांसाप्रकरणस्य । यदि 'ब्रह्मलोक आनन्दः' इति प्रथमपठितादन्यो भवेत् अनुपदपठितः 'एष ब्रह्मलोकानन्दः', तत्रापि 'श्रोत्रियस्यावृजिनस्य च' इति पुनः पठितं भवेत् । अन्तरत्वाधिकरणे "अथहैनं कहोलः पप्रच्छ" इत्यारब्धां प्रष्ट्रन्तरप्रश्नकथामधिकृत्य यदेव साक्षादपरोक्षाद्ब्रह्म' इति द्वितीये प्रश्ने एवकारंप्रयुञ्जानः पूर्वप्रश्नगतमेवार्थमुत्तरमनुकृष्यमाणं दर्शयति इति शांकरभाष्यवाक्यमिह भाव्यं एवकारविषये । नात्र सुषुप्तिजाग्रदाद्यवस्थाभेदप्रस्तावगन्धोपि । जाग्रतः संसारिजीवस्य श्रोत्रियस्य च चतुर्मुखतुल्यानन्दो वर्तत एवेति शपथनमुपहास्यं बाधितञ्च । सर्वोत्कृष्टमानुषानन्दचतुमुखानन्दयोरकामहतत्वे दुर्वचे सुषुप्तस्य विषये खलु "नैनं पाप्मा स्पृशति" 'अनन्वागतः पुण्येन अनन्वागतः पापेन' इत्यादिकं श्राव्यते । अत्र जाग्रतः श्रोत्रियस्य न जीवन्मुक्तत्वमुच्यते मणिना । अथशब्देन कात्स्न्यंमप्यभिप्रेयते ।

कार्त्स्न्येन आनन्दमयः । आनन्दवल्ल्याश्च 'यतो वाचो' इति निरतिशय-ब्रह्मानन्दगायके श्लोके विद्वद्ब्रह्मणोर्भेदः उक्तः कर्मकर्तृभावस्पष्टाभिधानेन, विदुषः कुतश्चन कदाचन क्वचन भयाभावरूपकफलप्राप्तिकीर्तनेन च । कुतश्चनेति जगत्कम्पकत्वेन सूर्यादिदेवानामपि भयनिमित्तत्वेन प्रसिद्धात् दण्डधरात् ब्रह्मणोऽपि भयाभावरूपफलं कीर्त्यत इति स्पष्टीक्रियते श्रुत्या 'एतं ह वाव न तपति किमहं पापमकरव' मिति । पापाद्भयमीश्वर-दण्डाद्भयमेव । शास्त्रान्तपठितानावृत्तिसूत्रमपीदं भयं शमयति । दण्डधराद्ब्रह्मणः स्वप्रियतमं त्वां मानवावर्ते नावर्तयेदिति । भोग-मात्रसाम्यसूत्रेण अनादिसिद्धेश्वरेण तदनुग्रहात् आनन्दसाम्यमुक्त्वा, तन्निग्रहात् आवृत्तिरूपभयमाशंक्य, तच्छमितमनावृत्तिसूत्रेण । मुक्तब्रह्मभेदो दुरपलपः । भोगमात्रसूत्रे शांकरभाष्योक्तः अनादि-सिद्धेश्वरो न कार्यं यस्य हिरण्यगर्भत्वमुच्यते । "भोगमात्रमेवैषानादि-सिद्धेनेश्वरेण समानमिति श्रूयते" इति तद्भाष्यवाक्यम् । अनादि-सिद्धेश्वरस्य कथं कार्यत्वम् । कथं तस्य जीवत्वम्, हिरण्यगर्भत्वं वा ॥

मणिः (२७ – पृ) — "उताविद्वानमुं लोकं प्रेत्य कश्चन गच्छति" इत्यविद्वद्विषये गतिप्रश्नः, 'आहो विद्वानमुं लोकं प्रेत्य कश्चित्समश्नुता उ' इति विद्वद्विषये समशनप्रश्नश्चोपपद्यते । अत्र विदुषः सर्वकामानुभवितृत्वमुत्क्रान्तिसापेक्षं न वेति प्रश्नेन विद्वद्विषये गतिनिरपेक्षब्रह्मतादात्म्यमेव 'ब्रह्मणा समश्नुते' इत्यत्र विवक्षितं वा उत ब्रह्मसहभाव एव गतिसापेक्षो विवक्षणीय इति प्रश्नान्तरमेव मुख्य विवक्ष्यते' ॥

उ — उता विद्वान् इति पदच्छेदः प्रदर्शितः पूर्वमेव स्वरबलेन । अत्राविदुषो ब्रह्मप्राप्तिशङ्काया अत्यन्तानवकाश इति पूर्वमेवोपपादितम् । अत्र मणिना यदुच्यते पूर्वप्रश्नः अविद्वद्विषयः, अविदुषः अर्चिरादिगति-

द्वारा ब्रह्मलोकं प्राप्य तत्सहभावसहभोगरूपफलप्राप्तिः सिद्ध्यति चेति तत्, 'समाना चासृत्युपक्रमात्' इत्यादिसूत्राणां तेषां स्वभाष्यस्य च विस्मरणनिबन्धनमेव । भाषितञ्च 'आसृत्युपक्रमात् । अविद्वान् देहबीजभूतान्याश्रित्य देहग्रहणमनुभवितुं संसरति, विद्वांस्तु ज्ञानप्रकाशितमोक्षनाडीद्वारमाश्रयते' इति । विदुष एवार्चिरादिगत्यन्वयः, नाविदुषः । मोक्षप्राप्तिद्वारं सुषुम्ना, न परिमितहिरण्यगर्भानन्दप्राप्तिद्वारम् । तदोक्तः सूत्रे च "समानेऽपि हि विद्वदविदुषोर्हृदयाग्रप्रद्योतने, मूर्धस्थानादेव विद्वान्निष्क्रामति स्थानान्तरेभ्यस्त्वितरे । कुतः, विद्यासामर्थ्यात् । यदि विद्वानपीतरवद्यतः कुतश्चिद्देहदेशादुत्क्रामेत् नैवोत्कृष्टं लोकं लभेत । तत्रानर्थिकैव विद्या स्यात् ।" इति भाषितम् । अत्र तद्विरुद्धमविद्वानर्चिरादिगत्या गच्छति, अविद्वद्विषयो गतिप्रश्नः' इति मणिर्वियातं वदति । तैत्तिरीयभाष्ये "यद्यविद्वत्सामान्यं कारणमपि ब्रह्म न गच्छति, ततो विदुषोऽपि अब्रह्मगमनमाशंक्येत । अतस्तं प्रति प्रश्नः 'उताहो विद्वा"निति भाषितम् । तत्र पूर्वार्द्धस्याविद्वद्विषयत्वं, उत्तरार्द्धस्य विदुषो ब्रह्मागमनशङ्काप्रयुक्तत्वञ्चेति भावः । अविद्वत्सामान्यस्य ब्रह्मगमनं नास्तीति तद्भाष्यभावस्स्फुटः, अब्रह्मगमनाशङ्कोक्त्या । 'विद्वान् ब्रह्मैव गच्छति विद्योत्पत्तेः । "ब्रह्मणस्समत्वेऽपि अविदुष इव विदुषोऽप्यगमनमाशंक्यते" इत्युत्तरवाक्येन अविदुषः ब्रह्मगमनाभावः प्रसिद्धवद्दृष्टान्ततयोपदिश्यते । अविद्वांसो ब्रह्म न गच्छन्ति तेषां गत्यन्वयो नास्तीति भावः स्पष्टः । तदेव सूत्रभाष्योक्तम् । विदुषो अर्चिरादिगत्यन्वयः, अनावृत्तिश्चास्ति इति चोक्तं तत्र । तदनुरोधेनात्र पूर्वार्द्धे कृतस्य विद्वद्विषयब्रह्मगमनप्रश्नस्य "स य एवंवित्, अस्माल्लोकात् प्रेत्य..........................एतमानन्दमयमात्मानमुपसंक्रामति" इति श्रुत्या उत्क्रान्तिगत्यादिपूर्वकमानन्दमयं परमात्मानं प्राप्नोतीत्युत्तरं दीयते । तस्य निरतिशयब्रह्मानन्दसमशनञ्च कथ्यते 'यतो वाच' इत्यानन्दमयविषय-

श्लोकेन ‘समश्नुता उ’ इति प्रश्नस्योत्तरत्वेन । ‘न गच्छति’ इत्युत्तरं नैव दत्तमत्र केनापि श्रुतिवाक्येन । वल्लीद्वयेऽपि, अस्माल्लोकात्प्रेत्य, आनन्दमयं ब्रह्म प्राप्नोतीति गमनमेवोच्यते । ‘अस्माल्लोकात्प्रेत्य’ इति गत्युक्तिः स्पष्टा वल्लीद्वयेऽपि परप्राप्तिरूपफलवर्णने । गतिनिरपेक्षब्रह्म-प्राप्तिवादः तैत्तिरीयप्रतिषिद्धः । “गतिनिरपेक्षं ब्रह्मतादात्म्यमेव ‘ब्रह्मणा समश्नुते’ इत्यत्र विवक्षितं वा, उत ब्रह्मसहभाव एव गतिसापेक्षो विवक्ष्यते वा” इति मणिप्रदर्शितप्रश्नशिरसी अस्मदुपनिषद्भाष्येऽपि प्रदर्शिते । वल्लीद्वयेऽपि दत्तमुत्तरं गत्य[illegible] । [illegible]-नन्तरमप्यनुसञ्चरणादिकं स्पष्टं निगदितम् । “स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य” इति स्पष्टं श्रावितं ब्रह्मणा सह सर्वकामाशनञ्च । “तद्धेतुव्यपदेशाच्च” इति सूत्रेण ‘ब्रह्मणा समश्नुते’ इति श्रुतेर्मुक्तानन्दस्य ब्रह्मानन्दहेतुकत्वोक्तिपरत्वञ्चास्तीति सूच्यते । “अस्मिन्नस्य च तद्योगं शास्ति” इति सूत्रेणोभयोस्सहभोगोऽपि सूच्यते । “तस्माद्धृदयालयेन ब्रह्मणा सूपासितेनानुगृहीतः तद्भावं समापन्नो विद्वान् मूर्धन्ययैव निष्क्रामति” इति तदोकस्सूत्रभाष्येणेश्वरतादात्म्यमुक्तं देहादुद्गच्छतो ब्रह्मविदः । तेन चेश्वरतादात्म्यापत्तिर्नोत्क्रान्तिगतिविरोधिनीति भाष्य-काराभिप्रायस्स्पष्टीक्रियते । ततश्च मणिप्रदर्शितविकल्पशिरसोः तन्मत-रीत्याविरोधाद्विकल्पवर्णनासंभवः । सर्वत्र भगवत्पादोक्ततादात्म्य-शब्दस्य साधर्म्यसाम्यसहयोगादिष्वेव तात्पर्यमित्येवानेन भाष्यवाक्येन निश्चेयं भवति । तथार्थग्रहणे “मम साधर्म्यमागताः” इति रामानुज-गीतावचनेन, रामानुजसिद्धान्तेन चाविरोधः फलतः सिद्ध्येत् । ‘विष्णुरेव भूत्वेमाल्लोकानभिजयति’ इत्यादाविव इवार्थत्वेन ‘ब्रह्मैव भवति’ इति श्रुतावेवकारो ग्राह्यः । अविरोधमेव वयमिच्छामः । ‘ब्रह्मणा समश्नुते’ इति वाक्यस्याभेदबोधकत्ववर्णनमशक्यमस्वरसतमञ्च ॥

मणिः — "अत एव 'सोऽकामयत' इति ब्रह्मणः सर्वतादात्म्यो-पपादनेनोत्तरग्रन्थः प्रवर्तते । अन्यथा गतिप्रश्नसमाधानं 'सोऽकामायत' इत्यादिसन्दर्भेण कथं सिद्ध्येत् ॥"

उ — इदं समाधास्यामः । "असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद" इति श्रवणादस्ति नास्तीति संशयः, ततोऽर्थप्राप्तः किमस्ति नास्तीति प्रथमानुप्रश्नः" इति श्रीशांकरभाष्ये असन्नेवेति श्लोक एव प्रश्नद्वयं वर्णितम् । तच्छ्लोककृतप्रश्नयोः प्राथमिकत्वम् । 'पश्चात् सादृश्ययोरनु' इति कोशः । कार्त्स्न्येन सर्वैरपि, आनन्दघनत्वेन ब्रह्मास्तित्वेऽकम्पनीयं प्रमाणमस्ति वा न वा, तादृशानन्दानुभविताऽस्ति वा न वा, कोऽत्र साक्षी, तस्य ब्रह्मविदः, तादृशब्रह्मानुभवोऽस्तीति कथं ज्ञायेतेत्यादिसंशयाः प्रथमं प्रतिवचनेनापनेयाः । दुःखरूपत्वेन संसारिलोकानुभूयमानस्य प्रपञ्चस्य ब्रह्मात्मकत्वे ब्रह्मानन्यत्वे सति कथं मुक्तादीनां ब्रह्मानुभवितॄणां मनोमयपर्यायश्लोकोक्तनिरतिशयानन्दानुभव-भयात्यन्ताभावसंभवः इति शङ्कामपनेतुं, 'आनन्दमयः विश्वशरीरः परमात्मा, तस्य प्रियमेव शिरः इति प्रियैकस्वभावत्वात् तस्य तच्छरीर-प्रपञ्चस्य च स्वतोऽनुकूलस्वभावत्वात्, स्वप्रजाभूतलोकोद्दिधीर्षया, सर्वस्यात्मतया हृदयगुहायां स्थित्वा मोक्षसाधनानि करणकलेबरादीनि दत्वा प्रजाः उन्निनीषति । तदुद्दिधीर्षयैव नामरूपव्याकरणरूपसृष्टिं कामयते । सर्वप्रपञ्चस्यानन्दमयब्रह्मात्मकत्वात् वस्तुतोऽनुकूलस्वभाव-त्वमेव । वस्तुतस्सुकृतमेव चिदचित्प्रपञ्चो न दुष्कृतम् । प्राणिकर्मो-पाधिकं तस्य दुःखत्वम् । आनन्दमयब्रह्मणि निरन्तरनिष्ठया तस्य प्रिया-नन्दादिमयस्वभावत्वस्य सम्यक् निश्चितत्वे सम्यगनुभवगोचरीभूते भयमपैति, सर्वात्मकानन्दमयब्रह्मापरोक्ष्यं जायते' इत्यादिकं पूर्वमेव विस्तरेणोपपादितम् । अस्मानानन्दयितुमेवानन्दमयत्वेन हृदयगुहाया-मवस्थितं ब्रह्म । हृदयस्थब्रह्मणः आनन्दमयत्वात् रसमयत्वात् ब्रह्मविदः

आनन्दित्वम् । ब्रह्मैकनिष्ठस्य परमानन्दानुभवदर्शनात् ब्रह्मण आनन्दमयत्वेनास्तित्वं दृढं सिध्यति । ब्रह्मण आनन्दमयत्वस्य तदानन्दस्य निरतिशयत्वस्य चोपपादनायानन्दमीमांसाकृता । तत्रैव मुक्तब्रह्मणोः सर्वोत्कृष्टपरमानन्दस्य सहानुभवस्य चोक्तिस्स्पष्टा "स एको ब्रह्मण आनन्दः श्रोत्रियस्य च" इति । तेन मध्युक्तपश्चात्प्रश्नस्योत्तरं दीयते ब्रह्मणा विपश्चिता सह भोग एव, नाभेद इति । 'ब्रह्मणा सह समश्नुते सर्वानानन्दान्' इति स्पष्टमुत्तरं दत्तम् । अस्ति ब्रह्मेति श्लोकोक्तेय-प्रश्नानां प्रश्नत्वं, 'उताविद्वान्' इति श्लोकोक्तानामनुप्रश्नत्वञ्च सूच्यत इव पश्चाद्दर्शकानुना । अत्र सहृदयहृदयं प्रमाणं वृणीमहे । 'निरतिशय-सुखरूपत्वञ्च ब्रह्मणः आनन्दमयोऽभ्यासादिति' इत्यादिषु भूमाधिकरण-श्रीभाष्यवाक्येषु तस्य 'तदात्मानं स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत इति । यद्वैतत्सुकृतम्, रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवति', 'आनन्दो ब्रह्मेति व्यजानात्, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति च वाक्येषु कार्यकारणभावस्य विभूत्यादिविशिष्टस्यैवानन्दत्वं हि स्फुटतरं' इति टीकावाक्येषु चेदं स्पष्टीकृतम् । 'सर्वं ह पश्यः पश्यति', 'न पश्यो मृत्युं पश्यति न रोगं नोऽत दुःखताम्' इति भूमविद्योक्तेः, सर्वप्रपञ्चस्य ब्रह्मात्मकत्वेनानन्दमयत्वानुभवस्समर्थ्यते प्रपञ्चस्यानन्दमय-ब्रह्मोपादानकत्वादिवर्णनेन । गतिप्रश्नस्य 'स य एवंवित्, अस्माल्लोकात् प्रेत्य' इति गत्यस्तित्वमेवोत्तरत्वेन कथ्यते । 'गच्छति' इति ब्रह्म-प्राप्त्यनन्तरमपि सञ्चरणादिकविषयप्रश्नस्य पूर्वमस्मद्वर्णितस्योत्तरं दीयते 'कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिना ॥

मणिः (२७ – २८ पृ) — "तथा चानन्दमयपर्यन्तमुपसंक्रमितव्यं विद्वद्विषयगतिव्याजेनोक्त्वा 'यतो वाचो निवर्तन्ते' इति विद्वद्गतिविषये मौनमेव वरमुत्तरं, तस्य गतेरसंभवात्" ।

उत्तरम् — इदं विपरीतैकान्तम् । उपसंक्रमणशब्दस्यार्थः पूर्वमेवोपपादितः । 'आनन्दमयमात्मानमुपसंक्रामति' इति आनन्दवल्ल्यां स्पष्टमानन्दमयपरमात्मप्राप्तिरुक्ता । सर्वात्मन आनन्दमयस्य प्राप्तावनुभाव्यमानानन्दो वर्ण्यते आनन्दमयतदनुभवविषयश्लोकेन । सर्वमत्र श्रुत्युक्तं व्याजमात्रमिति वदन् मणिर्निरंकुशः, स्वतन्त्रो न श्रुतिसूत्रादिशास्त्रवश्यः । तस्य स्वराजो नान्योऽस्ति राजा । गतिविषयकः प्रश्न इत्यभ्युपगम्यते । तस्य प्रश्नस्य गतिरस्तीत्युत्तरं दीयते 'अस्माल्लोकात्प्रेत्य', 'एतमानन्दमयमात्मानमुपसंक्रामति' इति श्रुतिभ्यामित्यभ्युपगम्यते । श्रुतिस्पष्टसमाधानवचनस्य व्याजोक्तित्वमुच्यते मणिना । गतिर्नास्तीति मौनेनोत्तरं ददाति श्रुतिरिति मण्युक्तिः गत्यस्तित्वबोधकस्पष्टवचनेन बाधिता । 'य एवंवित्, अस्माल्लोकात्प्रेत्य' इति विदुष एव अत्रैव श्रुतिस्पष्टवचनेनाभिधानेऽपि मूकत्वमवचनञ्च वदन् व्याहतभाष्येव । 'स य एवंवित्' इत्युक्तविद्वद्विषय एव गतिस्स्पष्टमुक्ता । भृगुवल्ल्यां 'एतमानन्दमयमात्मानमुपसंक्रम्य' इति ल्यपा एक एवात्राधिकारीति स्पष्टीकृतम् । तत्र आनन्दमयपरमात्मप्राप्त्यनन्तरमपि यथेष्टसञ्चरणादिकं श्राव्यते 'परमात्मप्राप्त्यनन्तरमपि गच्छति किं' इति पूर्वार्द्धप्रश्नस्योत्तरत्वेन । तत्रापि गतिविषये किं मौनं भजति श्रुतिरिति पृच्छामः । ब्रह्मानन्दस्य परिच्छेदविषये वाङ्मनसोर्निवृत्तिः, अर्चिरादिनिवृत्तिसमानार्थकेति मण्यभिप्राय इव, तस्मिञ्श्लोके 'निवर्तन्ते' इत्युक्तं, तस्मादर्चिरादिगतिनिवृत्तिः इति । निवर्तन्त इति गतिनिवृत्त्युक्तौ का मूकता । वाचामगोचरमस्मत्सुहृदुक्तिसामञ्जस्यम् । रसिकेभ्यस्ततो-निवृत्तिरेव रोचेत । अलमलमित्येव तद्विषये रसिकवाग्विसर्गो भवेत् । अविदुष एव गतिरिति मणिशपथनं भज्यतेऽत्र मणिनैव य एवंवित् इति गन्तृविषयश्रुत्युदाहरणेन ॥

मणिः (२८ पृ) — "अत एव 'आनन्दो ब्रह्मेति व्यजानात्' इत्यानन्दस्वरूपमेव ब्रह्मेति प्रतिपादितमुपपद्यते । 'आनन्दं ब्रह्मेति व्यजानात्' इत्येव पठितव्यं, यदि आनन्दप्रचुरं ब्रह्मेति धर्मधर्मिभावो विवक्षितस्स्यात् "॥

उ — धर्मवाच्येवानन्दशब्दः । न तस्य धर्मिणि रूढिः । तद्गुणसारत्वन्यायेन तस्य धर्मिवाचकत्वम् । स्वरूपस्याप्यानन्दघनत्वमुक्तं श्रुत्या । आनन्दोऽस्यास्तीत्यर्श आद्य च आश्रयणेऽपि धर्मविशिष्टत्वसिद्धिः । 'प्राणो ब्रह्मेति व्यजानात्' इति पर्याये प्रथमान्त एव शब्द उपात्तः । तथात्रापि । अन्नमनोविज्ञानपर्यायेष्वपि प्रथमान्तपठनमेव प्राणपर्यायानुरोधेन । अन्नाद्यानन्दान्तानामन्नमयाद्यानन्दमयान्तानाञ्चाविशेषः श्रुतिविवक्षित इति निरूपितं प्रागेव । 'आनन्दं ब्रह्मणो विद्वान्' इति सुस्पष्टं ब्रह्मण आनन्दधर्मवैशिष्ट्यमुक्तम् । असन्दिग्धेन स्पष्टेन तेन वचनेन आनन्दः इत्यत्रापि आनन्दविशिष्ट इत्यर्थो ग्राह्यः । स्वरूपार्थकत्वमप्यस्तु नाम । 'मुत् प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः । स्यादानन्दथुरानन्दः शर्मशातसुखानि च ॥' इत्यमरः । 'द्वादश हर्षस्य' इति सुधा । 'आनन्दो नन्दनो नन्दी' इति सहस्रनामस्वानन्दनामपठनं 'यानि नामानि गौणानि विख्यातानि महात्मनः । ऋषिभिः परिगीतानि' इति वचनेन 'आनन्दः' इति आनन्दगुणप्रधानत्वेनाप्युपपन्नम् । तद्गुणसारन्यायगर्भं उपबृंहणवचनम् । वेदमन्त्रस्य ऋषित्वं श्रुत्यादिप्रसिद्धम् । आनन्दशब्दस्य पुल्लिंगत्वात्, तस्य क्लीबत्वेन किमर्थं पाठो न कृत इति प्रश्नस्यासंगतता स्फुटा ॥

म (२४) — "तथाचानन्दप्रातिपदिकमात्रस्य सर्वत्राऽभ्यास उपपद्यते । न ह्यानन्दानन्दमयपदयोरेकार्थत्वं संभवति, आनन्दमयपदस्य धर्मिपरत्वात् ।"

उ अत्र धर्मवाचकत्वेनानन्दमयशब्दस्यानन्दपदस्य च भूयोऽभ्यासो दृश्यते । तदभ्यासश्चानन्दविशिष्टे आनन्दमये सर्वातिशयानन्दप्राचुर्यस्योपपादनायेति सुस्पष्टमानन्दमीमांसातः । अस्यामानन्दवल्ल्यां "आनन्दं ब्रह्मणः" इति प्रथमपठितद्वितीयान्तानन्दशब्दः आनन्दधर्मस्य वाचकः इति स्पष्टम् । तथैव आनन्दमयः इत्यत्र द्वितीयपठितानन्दशब्दः । तथैव 'आनन्द आत्मा' इति तृतीयः आनन्दशब्दः । 'आनन्दशब्दस्य धर्मपरत्वात्, इति मण्युक्तं सत्यमेव । मयड्सहितत्वमयड्रहितत्वाभ्यां न कोऽपि भेदः श्रुतिवुद्ध्येत्यादिकं पूर्वमेव समर्थितम् ॥

म — "अन्यथा आनन्दो ब्रह्मेत्यत्रापि पुल्लिंगनिर्देशोऽनुपपन्न एव स्यात्" ।

उ — पुल्लिंग एवानन्दशब्दः प्रायेण वेदेऽपि । "प्रज्ञानमानन्दं ब्रह्मे' ति वाक्ये क्लीबे प्रयोगो दृश्यते । तत्र आनन्दस्वरूपत्वानन्दधर्मवत्वे अभिप्रेते विशेष्यनिघ्नत्वेन क्लीबप्रयोगात् । तत्र आनन्दस्वरूपमात्रत्वे आद्रियमाणे "आनन्दो ब्रह्मेति व्यजानात्" इत्यस्यां श्रुतौ पुल्लिंगप्रयोगात् स्वरूपमात्रपरत्वं नास्तीति अनिष्टमापतेत् चोदयितुः । न ब्रह्मानन्दशब्दयोः पर्यायत्वं साक्षात् । पुल्लिंगनिर्देशः धर्मविशिष्टत्वानुकूलः तद्गुणसारत्वादिकमवलम्ब्य ॥

म — "ब्रह्मण आनन्दं' इति तु राहोः शिरः इतिवद्भेदेऽपि न विरुद्धम् ।"

उ — अगतिकगत्याश्रयणमेव महादोषः । आनन्दमिति द्वितीयान्तपुल्लिंगशब्दः आनन्दधर्मवाची । ब्रह्म च तद्विशिष्टधर्मि । "आनन्दी भवति' इत्यत्र ब्रह्मविदः आनन्दधर्मवैशिष्ट्यस्योक्तेः स्पष्टत्वात् आनन्दशब्दस्य धर्मवाचकत्वमेव । मत्वर्थीयेनिना ब्रह्मविद आनन्दप्राचुर्यमुच्यते । तत्प्राचुर्यस्य ब्रह्मण इव निरवधिकत्वं 'आनन्दं ब्रह्मणो विद्वान्' इति श्लोके

विव्रियते। आनन्दशब्दस्यानन्दस्वरूपवाचकत्वं ब्रह्मविषयमात्रे वा सर्वत्र वेति पृच्छामः । आनन्दशब्दस्य ब्रह्मशब्दपर्यायत्वं दुर्वचम् । स्वरूपं धर्मः इत्युभयोरानन्दत्वरूपानुकूलत्वमस्ति । अनुकूलप्रकारत्वमानन्दस्वरूपत्वम् । न निष्प्रकारकत्वम् । आनन्दो ज्ञानविशेषः । स्वरूपतो गुणतश्चापरिच्छिन्नत्वं ब्रह्मशब्दार्थः । "ज्ञानमेव ह्यनुकूलमानन्दः" इत्युच्यते । विज्ञानमानन्दं ब्रह्मेत्यानन्दरूपमेव ज्ञानं ब्रह्मेत्यर्थः। अतएव (ज्ञानानन्दशब्दयोरेकविषयत्वादेव) भवतामेकरसता । अस्य ज्ञानस्वरूपस्यैव ज्ञातृत्वमपि श्रुतिशतसमधिगतमित्युक्तम् । तद्वदेव 'स एको ब्रह्मण आनन्दः' 'आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म अपित्वानन्दि । "ज्ञातृत्वमेव ह्यानन्दित्वम्" इति श्रीभाष्यम् । "स्वप्रकाशत्वानुकूलत्वरूपप्रवृत्तिनिमित्तभेदात् श्रुतौ विज्ञानानन्दयोस्समभिव्याहार उपपद्यते । आनन्दस्यानन्दाश्रयत्वाभावः किं श्रुत्या, उत व्याप्त्या । व्याप्त्या चेत्कस्यचिद्धर्मः स्यात् । श्रुतिबलात्स्वतन्त्र इति चेत् तत एवानन्दाश्रयत्वमभ्युपगम्यताम । धर्मभूतानन्दस्य हि आनन्दाश्रयत्वाभावो दृष्टः । अतो व्याप्तिविरोधश्च नास्ति । अतस्स्वतन्त्रत्ववत् गुणाश्रयत्वमपि स्वीकार्यमिति भावः" इति श्रुतप्रकाशिका । यस्मिन् श्लोके आनन्दस्य वाङ्मनसाऽपरिच्छेद्यत्वमुच्यते तत्रैवानन्दस्य ब्रह्मधर्मत्वं तस्यानुभाव्यत्वञ्च स्पष्टं श्रावितम् । श्रुतिसूत्रविरुद्धो मण्यभिमतनिर्विशेषवादः । श्रीशंकरहृदयविरुद्धश्च ॥

मणिः — तद्गुणसारत्वात्तद्व्यपदेशस्तु गौण एव, न मुख्यः । गौणमुख्ययोर्हि मुख्ये कार्यसंप्रत्ययः इति मुख्यार्थबाधायोगः ।

उत्तरम् — तद्गुणसारत्वसूत्रे ज्ञानानन्दादिशब्दानां ज्ञानानन्दादिगुणेष्वेव मुख्यत्वं, तत्तद्गुणपूर्णत्वात् तत्तद्धर्माश्रयेषु धर्मिषु तत्तद्गुणवाचिपदेन व्यपदेशः क्रियते इति स्पष्टमुच्यते सूत्रकृता । गुणेषु पदानां मुख्यत्वं, गुणद्वारा गुणाश्रयधर्मिवाचकत्वमिति स्पष्टमुक्तं तेन । आनन्द-

शब्दस्य गुणपरत्वं परित्यज्य गुणशून्यवस्तुपरत्वं खल्वीप्स्यते मणिकृता । मुख्यार्थस्यात्यन्तपरित्यागः स्वेन क्रियत इति न स्मरति मणिकृत् । 'यानि नामानि गौणानि' इत्युपबृंहणमपि वाच्यगुणसंबन्धान्नाम्नां प्रख्यातत्वं वक्ति । सारगुणप्रख्यायकत्वात् गुणवाचिनामपदेन व्यपदेशः क्रियते । धर्मविषयत्वे पदस्य साक्षाद्वाचित्वं, तदाश्रयधर्मिणि आश्रित-धर्मद्वारेति स्पष्टं वदति सूत्रकारः । तद्विपरीतं वदत्यत्र वैपरीत्यनिरतो मणिर्धर्मे गौणत्वं, धर्मिणि च मुख्यत्वम् । 'आनन्दं ब्रह्मणः, ब्रह्मण आनन्दः' इति वदन्ती श्रुतिरानन्दधर्मे मुख्यत्वमेवाभिप्रेत्यानन्दशब्दस्य, स एको ब्रह्मण आनन्दः' इत्यत्र ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वं, आनन्द-शब्दस्य धर्मे मुख्यत्वं, आनन्दप्रतियोगिषष्ठ्यन्तब्रह्मशब्दस्वारस्यं, व्यतिरेकनिर्देशं सर्वं निष्करुणं निघ्नन्मणिः अत्र मुख्यत्वोल्लङ्घनदोषमस्मासु मिथ्यारोपयति आरोपरसिकत्वात् । मुख्यत्वोल्लङ्घनव्यसने निमग्नो मणिपक्षः । चतुर्मुखानन्दपरत्वे, ब्रह्मशब्दस्वारस्यात् 'परं जैमिनिः मुख्यत्वात्' 'स्याच्चैकस्य ब्रह्मशब्दवत्' इति ब्रह्मशब्दस्य परस्मिन्नेव मुख्यवृत्तत्वस्य सूत्रितत्वात्, ब्रह्मविदाप्नोति, ब्रह्मणा विपश्चिता, आनन्दं ब्रह्मणः, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेदेति प्रकरणस्थानां ब्रह्मपरत्वात्प्रकरणविरोधश्च । 'आनन्दं ब्रह्मणो विद्वानि' ति पूर्वत्रोत्तरत्र चानन्दप्रतियोगिषष्ठ्यन्तब्रह्मशब्दस्वारस्यविरोधश्च ।' इत्यादिकं श्रुत-प्रकाशिकोक्तमवधेयम् ।

मणिः (२९ पृ) — "ब्रह्मविदाप्नोति पर' मिति केवलब्रह्म-पदेनोपक्रमः, 'ब्रह्म पुच्छं प्रतिष्ठा' इति तेनैवोपसंहारः, तदर्थतयैव चान्नमयादिवाक्यानां प्रवृत्तिः । सति चैव जर्तिलादिवाक्यस्येवोत्तर-वाक्येन बाधे पूर्ववाक्यस्य ग्राह्यसमर्पकत्वायोगेनान्नमयादीनामिवानन्द-मयस्यापि 'तस्यैष एव शारीर आत्मा' इति वाक्येनार्थतो निषेध्यतयाव-गतस्य न ग्राह्यत्वमित्येवावगन्तव्यम् ।"

उत्तरम् — उपक्रमस्थं ब्रह्मपदं 'सत्यं ज्ञानमनन्तं, निहितं गुहायां, विपश्चित् आत्मा, शारीर आत्मा, आनन्दमयः' इत्यां विशेषितं अपेक्षितब्रह्माकारसमर्पणाय । तस्य विश्वशारीरात्मत्वं विस्तरेण उपपाद्यते । भूयश्चाभ्यस्यते 'एष एव शारीर आत्मा' इति । तदानन्दस्य निरतिशयप्राचुर्यमुक्तं मनोमयपर्यायश्लोकेन । तस्य सर्वान्तरात्मत्वमुपपाद्यते तस्य तस्य शारीरात्मत्वकथनेन । मनोमयान्तरस्य विज्ञानमयस्यान्तर आत्मा इत्यन्तरात्मपरम्परामानन्दमये समाप्य तस्यैव शारीरात्मत्वप्रदर्शनेन, तदुक्त्यभ्यासेन च ब्रह्मत्वं दर्शयति तस्मिन्नेवार्थे बह्वभ्यासघटितशारीरकब्राह्मणप्रत्यभिज्ञापनेन । ब्रह्मण आनन्दपूर्णत्वं तस्य प्रियैकस्वभावत्वात् स्वप्रियभक्तेभ्यस्तत्कार्त्स्न्यवितरणशीलताञ्च परमादरेण वर्णयति श्रुतिरत्र । आरम्भादेव ब्रह्मणोऽपि तद्गुणानामधिककाम्यत्वं प्रदिदर्शयिष्यते ; ब्रह्ममहिम्नः तत्स्पृहणीयतायाश्च भूम्ने आनन्दमयब्रह्मणः आनन्दगुणमीमांसां करोति । ब्रह्मण्यानन्दमयसंज्ञापठनं, तत्सर्वावयवानामानन्दत्वकीर्तनञ्च कृत्स्नप्रकरणप्रतिपादितानन्दप्राचुर्यप्रतिष्ठापनाय । आनन्दप्राचुर्यं नाम्नैव कीर्तयित्वा, तस्य सर्वावयवानामानन्दत्वोक्त्या कार्त्स्न्येनानन्दपूर्णत्वं प्रदर्श्य, तस्यैव ब्रह्मत्वमिति स्वाशयं स्पष्टीकरोति 'तदप्येष श्लोको भवति' इति स्पष्टाभिधानपूर्वकं तद्विषये ब्रह्मशब्दघटितश्लोकगानेन । आनन्दमयनामपठनानन्तरं तस्य रसत्वं, सर्वानन्दहेतुत्वं, तस्य तदानन्दस्य चाकाशवद्व्याप्तत्वं, उपासकानां सर्वत्र प्रेमकृपाभ्यां आकाशमानत्वञ्चोक्त्वा, आनन्दमयधर्मभूतानन्दविषये मीमांसां करोति तन्नामस्थमयड्बोधितानन्दप्राचुर्यस्य निरतिशयत्वोपपादनाय । 'तदप्येष श्लोको भवति, तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति 'अस्ति ब्रह्मे' ति श्लोकपूर्वोत्तरवाक्याभ्यां श्लोकस्यानन्दमयब्रह्मविषयत्वं एष एवेति आनन्दमयस्यानुस्यूततया पूर्वं पश्चाच्च प्रक्रियमाणत्वञ्च स्पष्टयति । इतः परं रसानन्दानन्दमयशब्दाः

भूयोऽभ्यस्यन्ते ब्रह्मविषये । वल्ल्यन्ते चानन्दमयमेव सर्वान्तरपरमात्मत्वेन कीर्तयित्वा 'तदप्येष श्लोको भवति' इति वाक्येन तस्य प्रकरणितया प्रस्तुतत्वं, आनन्दापरिच्छेदनिगदितृश्लोकस्य च तद्विषयतां च स्पष्टमभिधत्ते । 'ब्रह्मार्थतयैव चान्नमयादीनां प्रवृत्तिः' इति मणिः । आनन्दमयशब्दो ब्रह्मशब्दार्थक एव । तस्यैव सर्वान्तरात्मत्वं शब्दत उच्यते, तदन्तर आत्मा नास्तीत्येव श्रुतिशब्दार्थः इत्यभ्युपगम्यते मणिवाक्यैः । 'अर्थतो निषेध्यतयावगति' रित्युक्तिः शब्दतोऽनभिधानाभ्युपगमार्था । अर्थतो गम्यत्वोक्तिः पूर्वमेव प्रत्युक्ता । विरोधे खलु बलाबलविचारः । अत्र विरोधगन्ध एव नास्ति । अभिधानश्रुत्यैव ब्रह्मशब्दघटितस्य श्लोकस्यानन्दमयविषयत्वाभिधाने सति कोऽत्र न्यायस्यावकाशः । स्पष्टश्रुतिवचनविरोधे न न्यायस्यावकाशः । रसानन्दशब्दयोर्ब्रह्मशब्दैकार्थत्वं वदति मणिकृत् प्रदीपे च । तथा च सति आनन्दमयशब्देन किमपराद्धम् । ब्रह्मशब्दोपक्रमोपसंहाराभ्यां यथा न रसानन्दादिशब्दानां ब्रह्मभिन्नार्थसिद्धिः, तथा आनन्दमयस्यापीति वदामः । श्रुत्यन्तरप्रसिद्धा ब्रह्मण्यानन्दमयसंज्ञात्र पठिता । अन्नमयादिश्लोकेषु ब्रह्मशब्दः पठितः । अन्नमयादीनामब्रह्मत्वं, तेषां इतिशब्दपठनपूर्वकं ब्रह्मत्वेनोपासनोक्त्या सिद्धम् । मनोमयस्य ब्रह्मभेदः ब्रह्मानन्दवेदनानुकूलत्वोक्त्या सिद्ध्यति । आनन्दमयस्य ब्रह्मत्वेनोपासनं नोक्तमुभयोरेकत्वात् । अन्नमयादिपर्यायेषु यथान्तरात्मान्तरमुक्तं न तथानन्दमयपर्याये । सच्छब्देनोपक्रान्ता सद्विद्या न सच्छब्देनोपसंहृता । आत्मशब्दो दृश्यतेऽन्ते 'स आत्मा' इति । आत्मशब्देनोपक्रान्ता भूमविद्या । तस्या भूमविद्येति संज्ञा । स्ववाचकशब्दान्तरपठनेन नोपक्रमाद्यैक्यस्य भङ्गः । विरोधसत्त्वे खलु बलाबलविचारस्यावकाशलाभः । 'रसानन्दानन्दमयपदानामेकार्थत्वम् । इत्थञ्च धर्मिपर्यन्तबोधकानन्दमयपदघटितो

पक्रमानुसारेण मध्यपतितमानन्दपदं तत्समानार्थकं रसपदं चानन्दवत्परमिति युक्त' मित्यस्मत्स्वाम्युक्तं निराबाधमेव ॥

मणिः (२९) पृ — " सत्यं ज्ञानमनन्तं ब्रह्मे' त्युपक्रमस्य 'ब्रह्म-इत्युपसंहारस्य च निर्विशेषपरत्वेनोपक्रमोपसंहारयोर्धर्मिपर्यन्तत्वा-विषयत्वात् विना मयडन्तं भृगुवल्ल्यां 'अन्नं ब्रह्मेति व्यजानात्, प्राणो ब्रह्मेति व्यजानात्, मनो ब्रह्मेति व्यजानात्, आनन्दो ब्रह्मेति व्यजनात्" इति स्वरूपबोधकत्वेनैवोपक्रमोपसंहारयोः प्रवृत्तत्वात् अन्नमयादीनां मयडन्तेन प्रवृत्तयोरमुख्यात्मविषयत्वस्यैव युक्तत्वेनांगानुरोधानुनयनस्या-युक्तत्वेन चानन्दरसादिशब्दानां धर्मिपरत्वायोगात्, " ॥

उ — सर्वत्राऽसिद्धेनाऽसिद्धस्य साधनमिष्यते मणिना । तस्य दुश्शाकतैव । व्याघातदोषसागरे मग्नो मणिः । आमूलाग्रं कृत्स्नाया उपनिषदः सगुणपरत्वं निर्गुणपरिपन्थित्वञ्चोपपादितमेवास्माभिः । एतद्विद्यायामेव विषयवाक्योक्तसत्यत्वज्ञानत्वानन्दत्वादिधर्मवैशिष्ट्यमेवो-पपादितं ब्रह्मणस्सर्वविद्यानुयायित्वेनानन्दाद्यधिकरणेन, तस्याद्वैत-भाष्यादिभिश्च' सूत्रकारेण भगवत्पादभाष्येण च प्रत्युक्तं मण्युक्तं ब्रह्मणो निर्धर्मकत्वम् । इयमेव विद्या विचारिता तदधिकरणे । आनन्दमयस्यैव प्रियशिरस्त्वाद्यवयवोपलक्षितब्रह्मत्वं स्पष्टं द्योतितं तदधिकरणेन सूत्रकृद्धृदयत्वेन । सूत्राक्षरस्पष्टविरोधेन स्वभाष्य-विरोधेन च मण्युक्तिः पराहता । "उपक्रमोपसंहारयोर्धर्मिपर्यन्तत्वा-विषयत्वात्' इत्यस्यार्थो नास्माभिर्मितप्रज्ञैरवबुध्यते । ब्रह्म, किं धर्मि वा, धर्मो वा, अनुभयं वा । उपक्रमोपसंहारयोर्ब्रह्मपरत्वमस्ति वा न वा । यदि धर्मिशब्देन धर्मविशिष्टत्वमभिप्रेयते, आनन्दादीनां ब्रह्मरूपाश्रयस्य प्रधानस्य धर्मत्वं, ब्रह्मणस्तद्धर्मवैशिष्ट्यं तादृशवैशिष्ट्यस्य सर्वविद्यानुयायित्वञ्च स्पष्टं सिद्धान्तितं सूत्रैः, तेषां शांकरभाष्येण च ।

मयडन्तशब्दैरेव ब्रह्म भूयोनिर्दिष्टमुपनिषत्सु । 'तेजोमयः अमृतमयः' इति मधुविद्यायां, 'अन्तश्शरीरे ज्योतिर्मयो हि शुभ्रः' इति मुण्डके । तत्रोक्तो ज्योतिर्मयः अन्तश्शरीरे सर्वान्तर आत्मा, आनन्दमयोऽत्रोक्तः । अस्यामेवोपनिषदि पूर्ववल्ल्यां 'य एषोऽन्तर्हृदयस्तस्मिन्नयं पुरुषः' इति पठित्वा 'अमृतो हिरण्मय' इति पठितम् । हिरण्मय इति मयडन्तपदेनैव ब्रह्म निर्दिष्टम् । मयड्विशिष्टेन मङ्गलगुणवाचकशब्देन भूयः सादरं सानन्दं निर्दिशति श्रुतिः आ उपनिषदुपक्रमात् आ च तदन्तम् । 'प्रज्ञानघनः आनन्दघनः' इत्यादीनां घनान्तप्रयोगाणां समानार्थतां मनुते श्रुतिः मयडन्तपदानां ब्रह्मनिर्देशने । तमबन्तनिर्देशसमानार्थताञ्च मनुते । 'यत्ते कल्याणतमं रूपमि' त्यादिकं पूर्वमेव प्रदर्शितम् । मयडन्तनिर्देशादेव ब्रह्मणि स्वारस्यमानन्दमयपदस्य । दुःखसागरमग्ने जीवे तस्याऽत्यन्तास्वरसता सहृदयमनस्साक्षिका । माण्डूक्यश्रुतिपठितत्वरूपश्रुतिप्रसिद्धिरप्यस्ति ब्रह्मविषये आनन्दमयशब्दस्य । मयडन्तसहितमानन्दवल्ल्यामन्नमयादिविज्ञानमयान्तान्पठित्वा, तद्विषयश्लोकेषु तदेकार्थान्मयड्रहितान् पठित्वा, पुनश्च वल्ल्यन्ते मयट्सहितान् पपाठ । उपक्रमोपसंहारयोर्मयडन्तपाठः मध्ये च तद्रहितः पाठः । इत्थं श्रुतिः मयट्सहिततद्रहितपदयोरेकार्थत्वं स्पष्टीचक्रे । भृगुवल्ल्यामन्नमयादीनां स्थाने प्रथमं मयड्रहितानन्नादीन् पठित्वा, अन्ते मयट्सहितांस्तान्पपाठ । आनन्दवल्ल्यामुपक्रमे मयट्सहितपठनं मध्ये मयड्रहितपठनं, वल्ल्यन्ते चोपसंहारे पुनर्मयड्विशिष्टपठनञ्च कृतम् । एकेनैव क्रमेण पञ्चवारं पठितानामेकार्थकत्वं दुरपलपम् । उपक्रमोपसंहारयोः, मध्ये च मयडन्तपाठो दृश्यते । सन्दंशन्यायेनापि मयड्रहितानां मयडन्तैरेकार्थत्वसिद्धिः । अस्ति स्पष्टं श्रुत्यभिधानं पुनः पुनरभ्यस्तं मयड्रहिततत्सहितपदयोरेकार्थत्वे 'तदप्येष' इति । भृगुवल्ल्यामुपसंहारे मयडन्तशब्दाः पठिताः । पूर्ववल्लीस्पष्टाभिहितैकार्थत्व-

वचनान्यनुसृत्य मयट्सहितपदानां तद्रहितपदैरेकार्थत्वसिद्धिरप्रकम्प्या । प्राणमयशब्दवाच्यं प्राणशब्दवाच्यम् । तयोः किं स्वरूपं, किं न स्वरूपम् । मयडन्तेनोपक्रान्तानाममुख्यात्मत्वमित्युच्यते मणिना । मयड्रहितानां अन्नप्राणमनसां किं मुख्यात्मत्वमिति पृच्छामः । विज्ञानमयस्य मयडन्तस्य मुख्यात्मत्वमस्ति । आनन्दमयस्य जीवत्वेऽपि तस्य मुख्यात्मत्वमस्त्येव । अन्नाद्युपास्यविशेषणत्वेन उपक्रमभूतान्नमयादिपर्यायश्लोकेषु ब्रह्मणः अमुख्यत्वोक्त्या पुच्छब्रह्मणः अमुख्यत्वं को वारयितुं समर्थः । विज्ञानमयस्य मुख्यात्मत्वात् व्यभिचरितो मणिहेतुः । तत्पर्यायपठितात्मनो मुख्यात्मत्ववत् आनन्दमयस्यापि मुख्यात्मत्वमेव । पूर्वपठितानामन्नमयप्राणमयादीनामनात्मत्वात् आनन्दमयस्याप्यनात्मत्वमित्यापत्तिः कथं वार्या । 'अन्नं ब्रह्मे' त्यादिभृगुवल्लीपर्यायेषु ब्रह्मशब्दस्य न निर्विशेषपरत्वम् । तद्वत् 'आनन्दं ब्रह्मे' त्यत्रापि तस्य न निर्विशेषपरत्वमित्युक्तिः कथं वार्येत । मुख्यात्मत्वमित्यत्र मुख्यविशेषणं किमर्थम् । व्यर्थं तत् । आत्मत्वमेव नास्ति प्राणमनसोः । 'मुख्यवृत्तत्वपदेन शक्यत्वविवक्षायां सगुणस्यैव मतान्तर इव शक्यत्वस्वीकारात् न शब्दासाधुत्वम् । 'निर्विशेषं तु लक्ष्यमेव स्वीक्रियते' इति मणिकृद्वदति प्रदीपे (३ पृष्ठे)। मुख्यत्वादरणे निर्विशेषस्य शशशृङ्गतैव । शब्दस्य मुख्यत्वमभिधावृत्त्या वाच्यत्वमिति सर्वतन्त्रसिद्धम् । 'गौण्यसंभवात्, स्याच्चैकस्य ब्रह्मशब्दवत्, परं जैमिनिर्मुख्यत्वात्' इत्यादिसूत्रैः इदमेव वेदान्तिमतमिति स्पष्टीकृतम् । एतद्विरुद्धं यत्किञ्चिद्वदतां सूत्रकृत्परिपन्थित्वमेव । 'मुख्ये कार्यसंप्रत्ययः' इत्युक्तिः स्वव्याघातिका जातिः । 'आत्मशब्दाच्च, आत्मगृहीतिरितरवदुत्तरात्, अन्वयादिति चेत्स्यादवधारणात्' इत्यादिसूत्राणि तदर्थाश्च पूर्वमेव प्रादर्शितास्माभिः । जर्तिलयवागुवाक्ये 'अजक्षीरेण जुहोति' इति स्पष्टं तृतीयाश्रुत्याजक्षीरं होमद्रव्यं विहितम् । तद्द्रव्यं हिंसया विना लभ्यते । हिंसां विना लभ्यस्य द्रव्यस्य प्राशस्त्यं

उक्तमर्थवादेन । अत्र 'तदप्येष श्लोको भवति' इति सुस्पष्टमभिधान-श्रुत्या ब्रह्मश्लोकस्यानन्दमयविषयत्वं विहितम् । अर्थत इति सामर्थ्यरूप-लिङ्गं स्वमनीषामात्रकल्पितं न स्पष्टश्रुतिविरोधेनोत्तिष्ठेत् ॥

मणिः (२९) पृ — "गुणिर्लिंगास्तु तद्वति' इति न्यायेन विशेष्यलिंगत्वं विना विशेष्यपर्यन्तबोधकताया असंभवात्, 'आनन्दो ब्रह्मेति व्यजाना' दित्यत्रानन्दमयपरत्वासंभवात्' ॥

उ — आनन्दशब्दो नियतपुलिंगः । तस्यानन्दशब्दस्थानिकानन्द-मयशब्दैकार्थत्वञ्च श्रुतिबुद्ध्या । यः शब्दः प्रयुज्यते शब्दान्तरस्थाने तदेकार्थत्वेन प्रयुक्तः स शब्दः स्वनियतलिंगेनैव पठ्येत । आनन्दः इत्येकदेशशब्दः आनन्दमयशब्दसूचकः । स च ब्रह्मशब्दपर्यायः, तत्संज्ञा च श्रुतिबुद्ध्या । नात्रानन्दब्रह्मशब्दयोर्विशेषणविशेष्यभावः यथा 'विज्ञानमानन्दं ब्रह्म' इति बृहदारण्यकश्रुतौ । तत्रानन्दवत्त्वार्थकत्वात् विशेष्यब्रह्मक्लीबलिंगपाठः कृतः 'प्राणं ब्रह्मत्वेनामन्यत', मनो ब्रह्मत्वेना-मन्यत' इति सर्वत्र द्वितीयायां प्रथमा पठितेति ग्रहणमपि स्वरसम् । निपातेनाभिधानं द्वितीयायाः । 'प्राणो ब्रह्मे' त्यत्रेवात्रापि पुल्लिङ्गपाठः ॥

मणिः — 'अन्यथा 'रूपं घटः' इति प्रयोगोऽपि साधुस्स्यात्' ।

उत्तरम् — विचित्रेयं प्रतिबन्दी । घटस्य रूपवत्त्वमेव, न रूपत्वम् । अर्थासंगत्या प्रयोगनिवृत्तिः । स्वायत्ते शब्दप्रयोगे नासंगतं प्रयोक्तव्यम् । रूपो घटः इति प्रयोगो न सुश्लिष्टः ॥

मणिः — 'एतेन 'स यो मनुष्याणां राद्धः - संपन्नतमः स मनुष्याणां परम आनन्दः' इति श्रुतिरपि व्याख्याता । तस्य मुक्तात्म-परत्वेनानन्दरूपताबोधन एव तात्पर्यात् ॥

उत्तरम् — तस्येत्यस्य मनुष्यस्येत्यर्थोऽभिप्रेयते वा, 'मनुष्यानन्दस्ये' त्यभिप्रेयते वा । उभयोरपि मुक्तात्मपरत्वोक्तेरसांगत्यं तुल्यम् । तस्येति श्रुतिपरामर्शस्यासंगतता स्फुटा । श्रुतेर्न क्लीवत्वं, पुंस्त्वं वा । मनुष्याणामेव संसारिणां सार्वभौमत्वेऽपि मुक्ततोक्तिः प्रत्यक्षबाधिता । न सार्वभौमस्याशनायाद्यतीतत्वमरोगत्वं वा, अदुःखत्वं वा । उत्कृष्टमनुष्यानन्दस्य मुक्तानन्दसाम्योक्तिर्वा, मुक्तपुरुषत्वोक्तिर्वा अत्यन्तासंगता, उक्तिमात्रव्याहता च । 'एषोऽस्य परमानन्दः' इति मुक्तप्राप्यपरमानन्दमुक्त्वा 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति मुक्तस्यानन्दस्य लेशमनुभवन्ति सर्वे इत्युक्तं निरूपयति उत्तरप्रकरणेन । मनुष्यपरमानन्दस्य मुक्तात्मत्वे पितृगन्धर्वलोकाद्यानन्दा अपि मुक्तात्मस्वरूपं स्युः । उत्तरोत्तरमानन्दगुणनोक्तिः, तत्तदानन्दानामुत्कर्षनिकर्षौ स्पष्टोक्तौ च तदा न संगच्छेरन् । कृत्स्नानि वाक्यान्यसंगतान्यापद्येरन् । सार्वभौमादयो न मुक्ताः, तद्धर्मभूततदानन्दस्तु मुक्तात्मेत्यापतेत् मनुष्यश्रेष्ठरूपधर्मी न मुक्तः, तद्धर्मस्तु मुक्तपुरुषः । अत्यन्तसरूपेयं श्रुतिरानन्दमीमांसाश्रुत्या । तत्राकामहतस्य श्रोत्रियस्य संसारित्वं, तदानन्दस्य च परिच्छिन्नत्वं, हिरण्यगर्भानन्दस्य च मुक्तानन्दादवरत्वञ्च पुनः पुनरुच्यन्ते मणिना । मणिबुद्ध्या मुक्त एव मुक्तानन्दः । आनन्दमीमांसापठितानामुत्तरोत्तरोत्कृष्टानन्दानामेतत्प्रकरणश्रुतिव्याख्यारीत्या मुक्तात्मत्वे, तेषां तैत्तिरीयभाष्योक्तमुच्चनीचत्वं मृषा भवेत् । 'मनुष्याणां परम आनन्दः' इत्यत्र 'आनन्दानन्दिनोरभेदनिर्देशात् नार्थान्तरभूतत्वमित्येतत्' इति शाङ्करभाष्यं सर्वैरुत्तरश्रुतिवाक्यैस्तद्भाष्यवाक्यैश्च व्याहतम् । सार्वभौमादय आनन्दिनः । यदि तदानन्दाः मुक्तात्मा, तेऽपि मुक्ता इत्येवापतेत् । संसारिणां देवमनुष्याणां मुक्तत्वोक्तिरुपहास्या, बाधिता च । नैषां ज्ञानित्वं वा, जीवन्मुक्तत्वं वोच्यते । 'मानुषः आनन्दः' इति स्पष्टतैत्तिरीयश्रुत्यनुसारेणात्राप्युत्कृष्टमनुष्यदेवादिसंबन्धिनः आनन्दस्य

ग्रहणमुक्तम् । एको मुक्तात्मा कथमुत्तरोत्तरं शतगुणितोत्तर-क्रमेण गुण्येत । मुक्तानामनन्तसंख्यावत्त्वं ततः फलेत् । सार्वभौमपितृदेवानां मिथो भेदः नीचोच्चता च भाष्येण प्रतिवाक्यं भाष्येत । सार्वभौमादिधर्मिणः तारतम्यवन्तो भिन्नाः उत्तरोत्तरमुत्कृष्टाः । तत्तदानन्दा अपि उत्तरोत्तरमुत्कृष्टाः । सार्वभौमादिधर्मिणोऽनेके मिथो भिन्नाश्च । तेषां धर्मभूतानन्दाः कथं एको मुक्तात्मा भवेरन् । धर्मिणो भिन्नास्तारतम्यवन्तः, तद्धर्मा आनन्दाश्चोत्तरोत्तरं शतगुणितपरिमाणाः इति स्वष्टस्सम्मतः श्रुत्यर्थः । अहन्त्वत्र धर्मधर्मिणोरभेदं शपथयामि, भिन्नाभिन्नत्वेन, नीचोच्चत्वेन, उत्तरोत्तरगुणितत्वेन, श्रुत्यभिधानं सर्वमहमन्यथयामि, मिथ्याकरोमि, एतदत्यन्तसरूपायां तैत्तिरीयमीमांसायां एतद्विरुद्धं भाषे इति भाषमाणस्य कथं श्रद्धेयता । परस्परापेक्षिण्यौ परस्परं भूयस्सरूपे इमे तैत्तिरीय-बार्हदारण्यकश्रुती । 'श्रुतिसामान्यात्' इति एकरीत्यार्थग्रहणे मुहुर्मुहुः स्वभाषितं न स्मृतमिवात्र ॥

मणिः ( ३० पृ ) — "तथा च कुत्राप्यानन्दवत्यानन्दशब्दप्रयोग-स्यासंभवात् रसानन्दादिशब्दानां नानन्दमयपर्यायत्वं संभवति ॥"

उत्तरम् — 'आनन्दानन्दिनोरभेदनिर्देशः' इति उदाहृतबार्ह-दारण्यकभाष्यव्याहतमिदम् । आनन्दी आनन्दवानेव । मत्वर्थीयः इनिः । 'रसं ह्येवायं लब्ध्वानन्दी भवति' इति मुक्तादीनामानन्दित्वोक्तिरनुसृता तद्भाष्यवाक्ये । 'तस्मादस्ति तत्तेषामानन्दकारणं रसवद्ब्रह्म' इति मतुबन्तरसवच्छब्देन ब्रह्मण आनन्दविशिष्टत्वं स्पष्टं भाषितम् । ब्रह्म आनन्दविशिष्टं तद्भोक्ता चानन्दविशिष्टः आनन्दी इति तत्स्पष्टार्थः । अवशात् तन्मुखात्सत्यमपि तत्र तत्र निर्गलतीति सन्तुष्यामः ॥

मणिः — 'न हि ब्रह्मानन्द एकरूपे प्रियमोदादिविभागोऽपि संभवति ॥'

उत्तरम् — अवयवाः कल्पिताः इति संप्रतिपन्नम् । पक्षित्वं रूप्यते ब्रह्मणः पक्ष्यवयवकल्पनाय । आनन्दवाचकैर्भिन्नशब्दैः तत्तदवयवा निर्दिश्यन्ते सर्वावयवतः कार्त्स्न्येनानन्दमयत्वप्रदर्शनाय । प्रियादीनां ब्रह्मानन्दपरत्वेनापि योजना प्रदर्शितास्माभिः । ब्रह्मानन्दत्वाभावेऽपि तेषां तदुपलक्षकत्वं सुवचं, उक्तञ्च । बृहदारण्यकश्रुतौ मनुष्याद्यानन्दानां निरतिशयपरमानन्दत्वं' मुक्तत्वञ्च ब्रुवद्भिर्न शक्यमेवं चोदयितुम् ॥

म — 'एतेन "प्रकरणस्य निर्विशेषविषयताशपथैकनिर्णेया, उपक्रमप्रभृत्युपसंहारान्तं बहुविधविशेषाणां तत्र प्रतीतेः बृहत्वोपास्यत्व-प्राप्यत्व-सत्यत्व-ज्ञानत्व-हृदयगुहानिहितत्व-परमव्योमनिलयत्व-सर्वकामवत्व-विपश्चित्वात्मत्वाऽऽकाशकारणत्वान्नप्राणमनोविज्ञानान्तरत्वनिरतिशया— नन्दवत्वादिधर्माः स्फुटतरमुपलभ्यन्ते इति" परास्तम्' ॥

उ — परास्तमिति वृथा शपथ्यते । स्वामिग्रन्थोक्तं सर्वं श्रुति-परामर्शेन, सूत्रपरामर्शेन, शांकरभाष्यपरामर्शेन च समर्थितमस्माभिः । समर्थयिष्यते च ॥

म — निर्विशेषत्वं ब्रह्मणः परमार्थतो विशेषराहित्यमेव । न कल्पितैर्विशेषैस्तद्विरोधः ॥

उ — अस्मिन्प्रकरणे स्वामिग्रन्थोक्ता बहवो विशेषाः श्राव्यन्ते श्रुत्येत्यभ्युपगम्य, तेषां कल्पितत्वं स्वकपोलमात्रेण कल्प्यते । अनया विद्यया खलु तेषां कल्पितत्वं वक्तव्यम् । सविशेषत्वमेवाभिधत्ते श्रुतिर्ब्रह्मणः तदानन्दस्य च । मुक्तब्रह्मणोर्भेदमेव भूयः स्पष्टं वक्ति । सूत्रकारोऽपि मुक्तब्रह्मभेदं, आनन्दादीनां ब्रह्मधर्मत्वं, ब्रह्मणो गुणविशिष्टताञ्च भूयो वक्ति ।

प्रपञ्चस्य मिथ्यात्वस्वप्नादितुल्यत्वादिपक्षञ्च स्पष्टं निराकरोति । श्रुत्या भिहितविशेषाणां कल्पितत्वकल्पनाऽत्यन्तामूला ॥

म — ब्रह्मत्वादयस्तु सर्वेऽपि व्यवहारार्थं कल्पिताः ॥

उ — ब्रह्मशब्दस्य मङ्गलगुणपूर्णत्वं, दोषराहित्यरूपनिर्गुणत्वञ्चार्थ इति जिज्ञासाधिकरणरत्नप्रभा पूर्वमेवोदाहृता । निर्गुणत्वेनाभिमतेषु सर्वेषु अधिकरणेषु गुणा एव हेतूक्रियन्ते पक्षभूतब्रह्मनिष्ठत्वेन । ब्रह्मणो बृहत्त्वमपि कल्पितमिति वदन्नस्मत्सुहृत् असद्ब्रह्मेति वेत्तीति आपतति । 'बृहतेर्धातोरर्थानुगमात्' इति शांकरभाष्यम् । अननुगम इति मणिः । बृहत्वब्रह्मयितृत्वे खलु शब्दार्थौ ॥

म — उपास्यत्वं न विवक्षितं, ज्ञेयत्वमेव विवक्षितम् ॥

उ — वेदनशब्दस्योपासनार्थता, आवृत्त्यधिकरणेन, तच्छांकरभाष्येण च निर्णीता । ज्ञेयत्वेऽपि ज्ञातृज्ञेयगम्यभेदो दुरपलपः ॥

म — वेद्यत्वन्तु ब्रह्मणो वृत्तिव्याप्यत्वं कल्पितत्वमेव । चैतन्यमात्रस्य मुख्यब्रह्मपदार्थत्वात् ॥

उ — वृत्तिव्याप्यत्वमात्रत्वाद्युक्तिः स्वगोष्ठीमात्रप्रसिद्धपरिभाषा सर्वतन्त्रविरुद्धा । अत्र ब्रह्मपदस्य चैतन्यमात्रे मुख्यत्वं वदति मणिः । "निर्विशेषन्तु लक्ष्यमेव स्वीक्रियते (ब्रह्मशब्दस्य)" इति प्रदीपस्य ३२० पृष्ठे उक्तं मणिकृता । तत्र तत्र यथेष्टं वदति मणिकृत् अन्यथान्यथा । इत्थं व्याघातसागरनिमग्नता, निबन्धुरश्रद्धेयतां द्रढयति । श्रुतिस्मृतिनिर्वचनैः, यास्कनिरुक्त्या, पदशक्त्या च, ब्रह्मशब्दस्य मङ्गलगुणपूर्णनिर्दोषपरमात्मनि मुख्यवृत्तित्वम् । तेन च निर्विशेषतावादस्योन्मूलितत्वमेव ॥

म — हृदयगुहानिहितत्वं हि ब्रह्मणः नात्र प्रकरणे निर्दिष्टं "यो वेद निहितं गुहाया" मित्यत्र तु गुहानिहितजीवात्माभेद एव ब्रह्मणः

प्रतिपाद्यते । इदञ्च निर्विशेषवादस्यैवाऽनुकूलम् । न तु सविशेषब्रह्मवादस्य ॥

उत्तरम — सत्यं ज्ञानमनन्तमिति लक्षणलक्षितं ब्रह्म यः परार्थिसाधकजीवः (स्वहृदय) गुहायां निहितं वेद स साधकजीवः सर्वान् कामान्त्सहाश्नुते ब्रह्मणा विपश्चिता इति श्रुत्यर्थस्स्पष्टः, शाङ्करभाष्यभाषितश्च । दुरपलंपोऽयमर्थः मणिसहस्रेणापि । अत्र ब्रह्मणो गुहानिहितत्वं न निर्दिश्यते इति वदन्मणिः, श्रुतिं, स्वभाष्यञ्च निर्भीकमपलपति व्याहन्ति च । 'गुहा-बुद्धिः । (तस्यां) परमव्योम्नि अव्याकृताख्ये आकाशे तस्मिन्नन्तर्निहितं ब्रह्म' इति शाङ्करभाष्यम् । 'हार्दमेवेति तु परमव्योम' इति हार्दाकाशस्य परमव्योमत्वं भाषितम् । 'तस्मिन् हार्दे व्योम्नि या बुद्धिः गुहा तस्यां निहितं ब्रह्म' इति च स्पष्टं भाषितं तत्र । 'ननु उक्तगुहानिहितत्वदर्शनात् न परमात्मा प्रत्येतव्य इति । गुहाहितत्वदर्शनादेव परमात्मा प्रत्येतव्य इति वदामः । गुहाहितत्वन्तु श्रुतिस्मृतिष्वसकृत् परमात्मन एव दृश्यते', 'गुहाहितं गह्वरेष्ठं पुराणं', 'यो वेद निहितं गुहायां परमे व्योमन्' इत्याद्यासु' इति गुहासूत्रशांकरभाष्येण मण्युक्तिरुन्मूलिता भवति । इयं तैत्तिरीयश्रुतिरेव तत्रोदाहृता । 'सर्वार्थान् विपरीतांश्च' इति भगवद्वानं भूयो भूयः स्मार्यामहे मण्युक्तिभिः । संसारिब्रह्मभेदः मुक्तब्रह्मभेदश्च, अनयोपनिषदा तत्तदधिकरणसूत्रैश्च सुस्पष्टमकम्पनीयं निरूप्यते । पुच्छभाष्यमपि तदेव द्रढयति । मुहुर्मुहुर्भेदस्पष्टाभिधानं भेदसमर्थनञ्च निर्विशेषवादानुकूलमिति कथनं विपरीतैकान्तम् ॥

मणिः (३१ पृ) — "एतेन देहान्तरत्वादिकमपि व्याख्यातम् । तस्यापि जीवाभेदनिरूपणार्थत्वात् ॥"

उ — गुहानिहितावात्मानौ द्वौ, ज्ञाज्ञत्व, ईशानीशत्व, रक्ष्य रक्षकत्व, दण्ड्यदण्डकत्वादिभिर्भिन्नाविति यथा श्राव्यते, तथा देहान्तरात्मनौ द्वौ भिन्नाविति स्पष्टं श्राव्यते "समाने वृक्षे पुरुषो निमग्नः अनिशयशोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति मुण्डकेन । "भेदव्यपदेशात्' इति द्युभ्वाद्यधिकरण-सूत्रेण एतद्वाक्यस्थः 'अन्यः' इति भेदव्यपदेशो हेतूक्तः जीवब्रह्मभेद-साधनाय । यद्यपि वाक्यान्तरमुपात्तं श्रीशांकरभाष्ये, तथापि "भेद-व्यपदेशश्चेह भवति "तमेवैकं जानथ आत्मानं' इति ज्ञेयज्ञातृभावेन' इति जीवब्रह्मभेदस्साधितः । ज्ञेयप्रकरणमिति मुहुर्मुहुराकृश्यते मणिना । किं तेन । ज्ञातृज्ञेयभावेन भेद एव दृढीक्रियते । ज्ञेयप्रकरणमेव मुण्डकं तन्मते । तत्र मोक्षदशायामपि वेद्यस्य वेदितुरन्यत्वं, वेदितुर्वेद्यमहिम-प्राप्तिश्च स्पष्टं श्राविते । 'मुक्तोपसृप्यव्यपदेशाच्च" इति तद्विद्याविषयसूत्रं ब्रह्मणो मुक्तप्राप्यत्वश्रुतेः जीवाद्भेदं सिद्धान्तयति । मोक्षसाधनज्ञानस्य यावदायुषमावर्त्यत्वं सूत्रतद्भाष्यादिसिद्धान्तितम् । वृक्षो देहः । देही अच्छेद्यः । देहच्छेद्यः इति वृक्षत्वरूपणं देहस्य । गीतायाञ्चेदं श्रुतिस्वारस्यं विवृतम् ॥

मणिः ( ३१ ) पृ — 'परमव्योमनिलयत्वं हि गुहानिहितत्वा पेक्षया नातिरिक्तो धर्मः ॥

उत्तरम् — 'यो गुहायां निहितं ब्रह्म वेद, स परमे व्योमन् अश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चिता' इत्यन्वयः प्रदर्शितः पूर्वमेव । "अप्राकृताकाशशब्दिते परमपदे' इत्यस्मदर्थः । 'सोऽध्यक्षः परमे व्योमन्' इत्यादिश्रुतिप्रसिद्धिरववेया । हृदयाकाशस्थदहरोपासकानां परमपदप्राप्तिस्तल्लोकानुभाव्यविशेषाश्च दहरवाक्यपठिता अवधेयाः ॥

मणिः — 'विपश्चित्वं तु सर्वज्ञत्वं, ब्रह्मणोऽभिन्ननिमित्तोपादानत्वव्यवस्थापनविधया सर्वतादात्म्ययोग्यत्वव्यवस्थापनार्थं कल्पितमेव' ॥

उत्तरम् — 'विपश्चिते'ति श्रौतविशेषणपदस्य सर्वज्ञत्वमित्यर्थो अभ्युपगम्यते मणिना । "यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः" इति मुण्डकं सर्वज्ञब्रह्मपरम् । "स विश्वकृत् विश्वविदात्मयोनिः ज्ञः कालकालो गुणी सर्वविद्यः' इति परब्रह्मणः सर्वज्ञत्वं सर्वकारणत्वञ्च वदन्ती श्वेताश्वतरश्रुतिः, 'परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति तस्य सर्वज्ञत्वसर्वकर्तृत्वादीनि स्वाभाविकानीति स्पष्टं वदति । तद्विरोधेन मणिकृदुक्तं सर्वज्ञत्वस्य कल्पितत्वं श्रुतिबाधितं को वा श्रद्धास्यति । "वेदाहमेतं पुरुषं महान्तं स्वाभाविकसर्वज्ञत्व सर्वशक्तिविशिष्टं" इति श्रुतिः । 'वेदाहमेतं काल्पनिकसर्वज्ञत्वोपलक्षितं सर्वज्ञत्वशून्यं इत्यस्मत्सुहृत् मणिकृत् गुणशून्यरसिकः शून्यगुणरसिकश्च । निमित्तकारणत्वं वा, उपादानकारणत्वं वा निर्विशेषे निष्क्रियेऽसङ्गतं उक्तिमात्र व्याहतं च । सगुणस्य निमित्तकारणत्वं साक्षात्, उपादानत्वञ्च शरीरद्वारास्वात्मनस्तत्रात्मतयावस्थानात् । विशिष्टस्यैव कारणत्वसंभव इति भूयो मणिनोक्तमिति पूर्वमेव प्रदर्शितम् । यो निर्विशेषो द्वितीयशून्यस्तस्य कथं सर्वतादात्म्यसंभवः । यस्य द्वितीयमेव नास्ति कथं तस्य सर्वात्मकत्वम् । चेतनस्य नाचेतनप्रपञ्चतादात्म्यसंभवः । "अश्मादिवच्च तदनुपपत्तिः' इति सूत्रं स्मर्तव्यम् । नामरूपव्याकरणेन ब्रह्मणः सर्वात्मकत्वसिद्धिं वयं वदामः ॥

मणिः — 'अन्यथा 'ब्रह्मणा' इति सहयोगतृतीयैव नाभेदे तृतीयेति स्यात् ॥'

उत्तरम् — इष्टापत्तिः । किमिदमापादननैपुण्यम् । अभेदतृतीया न भाष्याद्युक्ता । तदुक्ता इत्थंभूतलक्षणतृतीया नाभेदे तृतीया । जटाभिस्तापसः इत्यत्र न जटातापसयोरभेदः ॥

मणिः — 'तथा चेदमत्र सूच्यते, यत् ब्रह्मणेति सहयोगतृतीया विवक्षणे विपश्चितापदवैयर्थ्यापत्तिः, तद्विशेषणस्य तन्मते व्यर्थत्वात् ।'

उत्तरम् — विपश्चित्वविशेषणं निर्विशेषवादोन्मूलकम् । ब्रह्मशब्दस्य शक्त्या वा लक्षणया वा निर्विशेषत्वबोधकत्वं खल्वभिमन्यते मणिना । तदभिमतिरुन्मूल्यते सर्वज्ञत्वार्थकविपश्चिद्विशेषणेन । सगुणे ब्रह्मशब्दस्य मुख्यवृत्तत्वं प्रदीपोक्तम् । अमुख्यार्थं वदन्मणिकृत् मुख्यत्यागममुख्यग्रहणञ्च तीव्रं गर्हते । विपश्चित्वविशेषणं ब्रह्मशब्दमुख्यार्थे सगुणब्रह्मणि सुश्लिष्टम् । वह्निरनुष्णः इति वाक्यसादृश्यमापद्येत ब्रह्मणोऽत्र निर्विशेषत्वे । अस्मन्मते विपश्चित्त्वविशेषणस्य व्यर्थतामापादयन्मणिः तस्य स्वाभिमतनिर्विशेषविरुद्धत्वं तद्बाधकत्वञ्च न पश्यतीति विस्मयावहम् । अस्य विशेषणस्य बहुधा स्वारस्यं सार्थक्यञ्चास्मन्मते इति पूर्वमेव निरूपितम् । अस्मिन्वाक्ये एव तद्विशेषणस्य सार्थक्यं प्रदर्शनीयं, प्रदर्शितञ्चास्माभिः । 'सर्वान्कामान् समश्नुते' इति स्पष्टास्मिन्वाक्ये फलोक्तिः । संकल्पादेव सर्वकामानां सिद्धिः फलम् । ईश्वरसंकल्परूपसहकारं विना न कस्यापि फलस्य सिद्धिसंभवः । यो यः कामो मुक्ते उदेति उदेष्यति वा, तत्साक्षीकुर्वन् ईश्वरो विपश्चित् तत्क्षण एव तत्सिद्धिं संघटयति । 'सखायौ' इति मुक्तब्रह्मणोः ख्यानस्य समानत्वं श्रावितम् । विपश्चिता ब्रह्मणेति करणे तृतीयायाः स्वरसता स्फुटा । विविधं पश्यच्चित्त्वरूपसर्वज्ञत्वशालित्वाद्ब्रह्मणः तद्धेतुना मुक्तसंकल्पितसर्वकामज्ञानदानादिसिद्धिः । इत्थं सार्थकं विपश्चित्त्वम् । अस्मिन्मन्त्रवर्णे विपश्चिदित्युक्तं सविशेषं ब्रह्मैव कृत्स्नायामुपनिषदि गीयते । 'मान्त्रवर्णिकं विपश्चित् ब्रह्मैव आन्तं गीयते'। अन्यच्च । 'सर्वानुभवः' इति निर्गुणमुक्तित्वाभिमतप्रकरणपठितफलवचनस्य "सर्वस्मिन्सर्वमनुभवति इति सर्वानुभूः" इत्यर्थो भाषितः ...

बृहदारण्यकभाष्ये । तदेव वयं वदामो मुक्तिफलत्वेन, 'सर्वं ह पश्यः पश्यति, सर्वमाप्नोति सर्वशः' 'सर्वान्कामान्समश्नुते' इत्यादिश्रुत्यनुरोधेन ॥

मणिः — 'अत एव तदनन्तरमेव' 'तस्माद्वा एतस्मा' दिति कारणवाक्यप्रवृत्तिरुपपद्यते ॥'

उत्तरम् — सर्वविशेषशून्यस्य साक्षाद्वा परंपरया वा न कारणत्वसंभवः । निष्क्रियं निर्विशेषं द्वितीयरहितञ्च तत्, गुणक्रियादिरहितञ्च । तस्य स्रष्टृत्वोक्तिरुक्तिमात्रव्याहता । सूक्ष्मावस्थचिदचिच्छरीरत्वं विना कारणत्वासंभव एव । 'आत्मनः' इति सर्वशरीरित्वमुच्यते कारणत्वोपपादनाय ॥

मणिः — 'एतेनाकाशादिकारणत्वमपि व्याख्यातम् । तस्य तदुपादानत्वरूपस्य निर्विशेषवादव्यवस्थापनार्थत्वात् ॥'

उत्तरम् — विशिष्टस्यैवोपादानत्वमिति सर्ववेदान्तप्रसिद्धम् । "शक्तिरहितस्य परमेश्वरस्य प्रवृत्त्यनुपपत्तेः, न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिद्ध्यति" इति शांकरभाष्यम् । स्रष्टृत्वं सगुणस्य परमेश्वरस्यैवेति तद्भाषणमेव प्रामाणिकम् । मणिग्रन्थस्तद्विरुद्धस्त्याज्य एव ॥

मणिः — न हि श्रीभाष्यमते स्वत उपादानकारणत्वं स्वीक्रियते ॥

उत्तरम् — स्वत उपादनत्वं न वेदान्तमतम् । 'अद्वैतमते तु सगुणस्येश्वरस्यैव कारणतायाः स्वीकारात्' इति प्रदीपे मणिकृतः सावधारणोक्तिः । मणिविमर्शपूर्वभागे मण्युक्तयुक्तयः प्रदर्शिताः । केयं व्याघातव्यसनिता ॥

मणिः — 'निरतिशयानन्दत्वं तु नात्र प्रकरणे ब्रह्मधर्मतया प्रतिपाद्यते ॥'

उत्तरम् — "यतो वाच' इति श्रुतिर्द्विरभ्यस्ता । तत्र पूर्वार्द्धोक्ताऽवाङ्मनसगोचरानन्दो ब्रह्मण आनन्द इति स्पष्टमुक्तम् । आनन्दमीमांसा ब्रह्मधर्मभूतानन्दमीमांसा । 'आनन्दी' इति आनन्दविशिष्टब्रह्मविदं वर्णयति श्रुतिः । 'स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चे' ति श्रुतिः स्पष्टं मुक्तब्रह्मणोरानन्दधर्मवत्त्वं निगदति । यथा ब्रह्मवित् आनन्दी, तथा ब्रह्माप्यानन्द्येव । उभयोः साधर्म्यं श्रुतिस्मृतिप्रसिद्धम् । 'तादृगेव भवति' मुक्त आत्मा इति कठश्रुतिमतम् । मनुष्यगन्धर्वादीनामानन्दस्तदनुभूतानन्दधर्म एव । न तत्तत्स्वरूपमात्रम् ॥

मणिः — 'आन्दमयपदस्य निर्विशेषवादिभिर्जीवपरत्वस्यैव स्वीकारेण ब्रह्मपरत्वानंगीकारात्, प्रियमोदानन्दब्रह्मणां ब्रह्मण्यसंभवेन अभ्यासरूपहेतोरानन्दमयाविषयत्वेन, आनन्दमयब्रह्मताऽसाधकत्वेन, प्रकरणस्याप्यानन्दमयाविषयत्वेन, श्रुतिसूत्रस्वारस्यस्यानन्दमयब्रह्मत्वावादेऽसंभवाच्च ॥'

उत्तरम् — आनन्दमयो भृगुवल्ल्यन्ते चरमान्तरात्मत्वेन स्पष्टं पठ्यते । तदनन्तरं तदन्तरत्वेन वा, तत्प्रतिष्ठात्वेन वा न ब्रह्म पठ्यते । आनन्दमयप्राप्तिरेव आनन्दवल्ल्यारंभोक्ता परप्राप्तिरिति ततः सुस्पष्टम्। आनन्दवल्ल्यन्ते च तथैवानन्दमयमात्मानं परमप्राप्यत्वेन निगद्य तदनन्तरं तस्यैवानन्दो गीयते 'यतो वाचः' इति श्लोकेन ब्रह्मानन्दवर्णकेनेति स्पष्टवचनात् आनन्दमयब्रह्मणोरेकत्वं स्पष्टीकृतम् । एतेन चानन्दमयजीववादः श्रुतिस्पष्टविरुद्धः । निर्विशेषवादिभिरानन्दमयस्य जीवत्वकथनेनापि जीवस्य तस्य ब्रह्मभेद एव दृढीक्रियते सूत्रकारमुखेन एतदधिकरणे । तेन च स्वपक्षहननमेव क्रियते । प्रियमोदप्रमोदानन्दशब्दानां सुखानन्दवाचित्वं स्पष्टम् । तेषामलौकिकानन्दवाचकत्वेनाप्यर्थः प्रदर्शितोऽस्माभिः । कल्पितसर्वावयवानां सुखत्वोक्त्या कात्स्न्येनानन्द-

वत्त्वबोधने श्रुतितात्पर्यमित्यस्मद्भाष्यटीकादिवाक्यानि पूर्वमेव प्रदर्शितानि । यस्यावयवा न सन्ति, तस्मिन्नवयवकल्पना उपलक्षणयैव, न वास्तवावयत्वे तात्पर्यम् । स्वतः कार्त्स्न्येनानन्दस्वभावत्वं ब्रह्मण्येव संभवेत् । "अभ्यासहेतोरानन्दमयाविषयत्वेन" इत्युक्तिर्मिथ्या । ब्रह्मण आनन्दमयत्वोपपादकः 'यतो वाच' इति श्लोको द्विरभ्यस्तः । ब्रह्मण आनन्दमयत्वोपपादनार्थमेव तच्छ्लोकगानं तदभ्यसनं च । तस्य श्लोकस्यानन्दमयात्मविषयत्वं स्पष्टं निगदितं श्रुत्या आनन्दवल्ल्यन्ते 'तदप्येष श्लोको भवति" इति तच्छब्देन तदव्यवहितभूतपरमप्राप्यपरमात्मानन्दमयस्पष्टपरामर्शकेन । कोऽन्यस्तत्र परामृश्येत तच्छब्देन । आनन्दमयपरामर्शः स्पष्टमुक्तः परभाष्यादिभिरपि । प्रायपाठेन तस्याकम्पनीयता । सौत्राभ्यासहेतुः, आनन्दमयत्वोपपादकैतच्छ्लोकाभ्यासरूपशब्दाभ्यासमपि गृह्णातीति पूर्वमेव प्रदर्शितं भाष्यटीकाप्रकाशिकाद्युदाहरणेन । आनन्दमयपदप्रकृतिवाच्यानन्दधर्माभ्यासेनापि आनन्दमयस्य ब्रह्मत्वं साध्यते । अभ्यासशब्दस्य संबन्ध्यपेक्षा सौत्रपक्षपदादेव द्वेधा पूर्यते । 'यतो वाच' इति श्लोकस्यानन्दमयविषयत्वं स्पष्टं निगदितं श्रुत्या । स्पष्टतन्निगदनेन मनोमयपर्यायपठितश्लोकस्यानन्दमयविषयत्वं सुनिश्चितम् ॥

मणिः — 'एतेन 'अभ्यासपदस्य घञन्तत्वमाश्रित्य, आनन्दमयः परं ब्रह्म निरतिशयदशाशिरस्कत्वेनाभ्यस्यमानानन्दवत्वात् इति सूत्रार्थ एव युक्ततरः, वहिर्भूताभ्यासस्य हेतुत्वाश्रयणापेक्षया, निरतिशयदशाशिरस्काभ्यासस्य हेतुत्वांगीकारस्यात्यन्तोचितत्वात् इति परास्तम् ॥'

उत्तरम् — अस्मत्स्वामिग्रन्थोक्तस्यैव साधुत्वमिति समर्थितमस्माभिरधस्तात् । एतेन तस्य परास्तत्वोक्तिः परास्ता ॥

मणिः — सौत्राभ्यासपदस्य, आनन्दपदाध्याहारसापेक्षविवरणस्यास्य सूत्राशयासंस्पर्शितत्वात् ॥

उत्तरम् — ससम्बन्धिकः अभ्यासशब्दः, कस्याभ्यासः इति सम्बन्धिनमाकांक्षति । पक्षशब्देनैव वा, तदवयवभूतानन्दशब्देन वा, तत्पूरणं स्वरसम् । आनन्दमयस्य ब्रह्मत्वं, निरतिशयानन्दत्वञ्चोपपाद्यते, 'यतो वाचः' इति तद्विषयत्वेन द्विःपठितेन (अभ्यस्तेन) ब्रह्मसम्बन्ध्यानन्दनिरतिशयत्वावगमकश्लोकेन । पक्षपदस्थमयड्बोधितानन्दप्राचुर्यस्य सर्वजीवानन्दातिशायित्वञ्च निश्चीयते प्रकरणदृष्टानन्तधर्मगुणनाभ्यासेन । यथा हेतोः पक्षवृत्तित्वं सिद्ध्यत्, तथा सौत्रहेतुर्विव्रियते । "ब्रह्मशब्दाभ्यासस्यैव हेतुत्वमिति भावः" इति प्रदीपः (६५) पृष्ठे । स्वकल्पितपक्षभूतब्रह्मशब्देनाभ्यासशब्दस्य संबन्ध्यपेक्षा पूर्यते तत्र । वयं सूत्रपठितपक्षसंबन्धित्वं वदामः, पुच्छवादिनस्तु सूत्रपक्षपदं हित्वा, स्वकल्पितपक्षान्तरपदसंबन्धित्वमिति विशेषः । 'अभ्यस्यमानन्दब्रह्मानन्दादिशब्दघटितवाक्यशेषवत्वात्' इति (६९) पृष्ठे प्रदीपोक्तहेतुरिति पूर्वमेव प्रदर्शितम् । स्वोक्तं तत्स्मृत्वा मूकत्वं भजनीयं मणिना । ब्रह्मभजनं रोचयतां वा मा वा, अत्र मूकत्वभजनान्नान्या गतिस्तस्य ॥

मणिः — 'तात्पर्यलिंगं ह्यभ्यासमात्रमेव न त्वभ्यस्यमानधर्माश्रयत्वम् ॥'

उत्तरम् — अर्थसामर्थ्यरूपं लिंगं, शब्दाभ्यासरूपतात्पर्यलिंगमित्युभयमपि प्रदर्शितमस्माभिः । अर्थसामर्थ्यस्य प्राबल्यमपि प्रदर्शितम् ॥

मणिः (३२) पृष्ठे — 'यथा च निरतिशयदशाशिरस्कानन्दाश्रयत्वं वाङ्मनसागोचरत्वं वा नानन्दमयस्य, किन्तु पुच्छब्रह्मणः एव, तथा पूर्वमेवोपपादितम्' ॥

उत्तरम् — यथैतदुभयमानन्दमयाभिन्नब्रह्मणः, तथा पूर्वमेवोपपादितम् । 'तदप्येष श्लोको भवति' इति श्रुत्यैव स्पष्टमेतदुक्तम् । 'निरतिशयदशाशिरस्कत्वं तु नात्र प्रकरणे ब्रह्मधर्मतया' इति मण्युक्तमेतेन व्याहन्यते 'निरतिशयदशाशिरस्कानन्दाश्रयत्वं पुच्छब्रह्मण एवे' ति कथनेन । नैकजिह्वो मणिः ॥

मणिः — वस्तुतस्तु - आनन्दमयब्रह्मनाम्नाभ्रकहेतावभ्यस्यमानपदं व्यर्थं, वाङ्मनसागोचरत्वमात्रस्य यदा संभवः ॥

उत्तरम् — शब्दाभ्यासधर्माभ्यासरूपद्विविधाभ्यासेनापि आनन्दमयस्य जीवत्वप्रतिषेधः साध्यते । प्रकरणदृष्टानाभ्यासा विवक्ष्यन्ते ॥

मणिः — तथा च सौत्रस्याभ्यासपदस्यैवाञ्जलिप्रदानमापद्यते ॥

उत्तरम् — सर्वेषामपि सूत्राणां तत्पदानां क्रूरक्रूरपीडनच्छेदनादिकं कृतं पुच्छवादेन । दत्तो जलाञ्जलिः सर्वसूत्रसर्वपदेभ्यः तद्व्याख्यया । वयं सूत्राणामसन्दिग्धत्वं सारवत्त्वं विश्वतोमुखत्वञ्च मानयन्तस्सूत्रकृते, तत्सूत्रेभ्यश्च नमस्काराञ्जलिं समर्पयामः, विच्छिद्य विच्छिद्य मारयित्वा सूत्रेभ्यो जलाञ्जलिदाने निपुणा मण्यादिपुच्छव्याख्या ॥

मणिः — आनन्दमीमांसासमाप्तिर्हि 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति वाक्येन क्रियमाणा 'असावादित्यो ब्रह्मे' ति महावाक्यार्थब्रह्मरूपानन्द एव मीमांस्य आनन्दः, न तु हिरण्यगर्भान्तानन्दः इयत्ता परिच्छिन्नो वाङ्मनसागोचरो वेति ज्ञापयति ॥

उत्तरम् — पूर्वोदाहृतेन 'मीमांसया निरतिशयानन्दं ब्रह्मास्तीति निर्धारित' मित्यानन्दगिरिवाक्येन निरतिशयानन्दत्वनिरूपणेनैवानन्दमीमांसासमाप्तिरिति परमतनिष्कर्षः । तत्रैव मीमांसाया विश्रान्तिरिति स्पष्टमुक्तम् । तद्विरुद्धा मण्युक्तिः नादरमर्हति । हिरण्यगर्भानन्दे

विश्रान्ता मीमांसेति मण्याभिमानोऽसंगतः । जीवानन्दमीमांसा श्रुतिकृते-त्युक्तेरसांगत्यं सुस्फुटम् । जीवः खलु हिरण्यगर्भः । आनन्दमयानन्द-मीमांसात्वौचित्यस्य दुरपलपतां पश्यन्नेव मणिः, आनन्दमीमांसायाः जीवानन्दमीमांसात्वं शपथयति स्वमतपूर्वग्रन्थविरोधेन । आनन्द-मीमांसायाः ब्रह्मानन्दमीमांसात्वे आनन्दमयस्य ब्रह्मत्वं दुर्वारमिति मणिभीतिः । आनन्दमीमांसाया ब्रह्मानन्दमीमांसात्वस्य स्फुटत्वात्, पूर्वग्रन्थसंप्रतिपन्नत्वाच्च, आनन्दमयस्य ब्रह्मत्वसिद्धिरकम्पनीया । "श्रोत्रियस्य चाकामहतस्ये" ति एतत्प्रकरणोक्तस्य सर्वैषणाविनिर्मुक्त-स्वरूपमुक्तत्वञ्च स्पष्टं भाषितं, 'यतो वाच' इति ब्रह्मानन्दविषयक-श्लोकशांकरभाष्ये 'तं ब्रह्मण आनन्दं श्रोत्रियस्याऽवृजिनस्याकामहतस्य सर्वैषणाविनिर्मुक्तस्यात्मभूतं परमानन्दं ब्रह्मणो विद्वान् यथोक्तेन विधिना' इत्यादिना । बृहदारण्यकभाष्ये चैतत्प्रकरणे एवं शतगुणितोत्तर-प्रत्यक्षाः यत्र एकतां यान्ति, यश्च श्रोत्रियप्रत्यक्षः, अथ एष एव संप्रसाद-लक्षणः परम आनन्दः' इति निरतिशयपरमानन्दस्य श्रोत्रियप्रत्यक्षत्वं भाषितम् । इदं सर्वं 'श्रोत्रियस्याकामहतस्य' इत्येतत्प्रकरणोक्तः अकामहतो मुक्तः इत्यस्मन्मतार्थसंवादि, मण्युक्तिविसंवादि च, मणिकृतः च । सर्वोत्कृष्टानामानन्दानां

तत्समाने मुक्तानन्दे चान्तर्भाव उपपाद्यते 'सोऽश्नुते सर्वान्कामान्' इति मन्त्रवर्णोक्तिविवरणाय । 'मान्त्रवर्णिकमेव च गीयते' इति सूत्रस्याय-मपि विषयो भवेत् । 'स यश्चायं पुरुषे' इति मन्त्रस्यार्थः उपपादित एव पूर्वम् । पुरुषे इत्यस्य प्रकृताधिकारिणि जीवात्मनीत्यर्थः । स यश्चाय-मिति प्रकृत आनन्दमयो विश्वशरीर आत्मा परामृश्यते । आदित्ये इत्यस्य आदित्यमण्डलाभिमान्यादित्यदेवतात्मनीत्यर्थः । उभयोरैक्य-मुच्यते । अत्र श्रुतिस्वारस्यानि बहुश्रुत्यन्तरैकार्थताञ्च पूर्वमेवोपापी-पदाम । 'य आदित्ये, तिष्ठन् इत्यन्तर्यामिब्राह्मणवाक्यस्य, आदित्यादि-

शरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोन्तर्यामी इत्यर्थो भाषितः 'भेद-व्यपदेशाच्चान्यः' इति सूत्रे । सूत्रकारनिर्णीतार्थस्य एष । अन्तरधि-करणे 'अन्तरादित्ये इत्युक्तः पुरुषः आदित्यक्षेत्रज्ञः इत्यानन्दगिर्युक्तः पूर्वपक्षः । आदित्यक्षेत्रज्ञान्तर्यामी परमात्मा विश्वशरीर आत्मा' इति सिद्धान्तः । अस्मिन्वाक्ये जीवब्रह्माभेदस्यानवकाश एव । 'स यश्चायं पुरुष' इति खण्डस्य 'यो गुहायां निहितः परमव्योम्नि आकाशादिकार्यमन्नमयान्तं सृष्ट्वा तदेवानुप्रविष्टः स य इति निर्दिश्यते' इति भाष्येण परमात्मपरत्वं भाषितम् । तदनन्तरं 'यश्चासावादित्ये यः परमानन्दः श्रोत्रियप्रत्यक्षो निर्दिष्टः' इत्यत्र यच्छब्दस्य परमानन्दपरामर्शकत्वं भाष्यत इव । तेन च तत्पूर्वोक्तस्य ब्रह्मानन्दस्य परब्रह्मपरमानन्दत्व-सिद्धिः । पूर्वमादित्यप्रस्ताव एव नास्ति । 'यश्चासावादित्ये' इत्यादित्यजीवानन्दपरामर्शकथनं नैव संगतम् । श्रुत्यन्तरप्रसिद्ध्या 'यश्चासावादित्ये' इत्यस्य आदित्यदेवतान्तर्यामिपरमात्मग्रहणमेव न्याय्यम् । श्रुत्यन्तरप्रसिद्धिर्द्योत्यते 'यश्चासा' विति । आनन्दमय-ब्रह्मणो विश्वशरीरात्मत्वोपपादकं तत्प्रकरणं स्मार्यते । 'असावादित्यो ब्रह्म' इत्यस्य महावाक्यत्वं केनोक्तम् । तत्रानन्दस्य का प्रसक्तिः । अत्र ब्रह्मानन्दस्यैव मीमांसेति वदन्मणिः, मीमांसायाः, 'यतो वाच' इति श्लोकेऽप्यनुवर्तमानतामभ्युपगच्छति, मीमांसायाः आनन्दधर्म-विषयतां च । स यश्चायमिति वाक्येनानन्दमीमांसासमाप्तिः कृतेति स्ववाक्य-पूर्वभागोक्तं व्याहन्ति । 'ब्रह्मानन्द एव मीमांस्यानन्दः' इत्यत्र मण्युक्तिः, 'जीवस्यानन्दमयत्वं जाग्रद्दशायामपीति बोधनार्थमेवानन्दमीमांसा प्रस्तुता' इति (२६) पृष्ठे उक्तेन व्याहन्यते ॥

मणिः — 'स य एवं विदि' त्यत्रापि 'सत्यं ज्ञान' मिति प्रस्तुतं ब्रह्म न केवलं गुहानिहिताभिन्नं, किन्तु सूर्यान्तर्याम्यपीति ज्ञापनेन आनन्दमयशब्देनाभिदेवं जीवस्वरूपमपि विवक्ष्यते इति सूचन-

मर्धिदैवं परमकाष्ठापन्नो हिरण्यगर्भोऽपि जीवकोटिप्रविष्टः आनन्दमय एव ॥

उत्तरं — दुरवबोधमिदं वाक्यम् । जरद्गवादिवाक्यतुल्यत्वं सुवचमस्य । 'गुहानिहित'मिति मन्त्रवर्णोक्तं ब्रह्म सत्यं ज्ञानमित्युक्तम् । अत्र 'यश्चासावादित्ये' इत्यस्य सूर्यान्तर्यामिपरत्वमुच्यत इव मणिना यथास्माभिः । आनन्दपरत्वं नोच्यते यथा भाष्यैकदेशे । हिरण्यगर्भोऽपि जीवकोटिप्रविष्ट इत्यस्मन्मतं वक्तीति सन्तुष्यामः । एतेन तस्य सगुणपरमेश्वरत्वं नास्तीति स्फुटं भवति । तेन च कार्यहिरण्यगर्भोपासनं न सगुणब्रह्मोपासनम् । हिरण्यगर्भोपासको न विद्वान् । न तस्याऽर्चिरादिगत्यन्वयः ॥

मणिः — एतेन भवद्रीत्या पूर्वं परमानन्दस्य निर्देशाभावेन यत्पदेन परामर्शायोगः । ब्रह्मण आनन्दः' इत्यादिब्रह्मपदं भवन्मते हिरण्यगर्भपरमेव । आनन्दपदञ्च परमानन्दमात्राभूतानन्दपरम् । अस्य हिरण्यगर्भानन्दत्वे 'सैषानन्दस्य' इत्यानन्दपदमपि न भवत्पक्षे परमानन्दपरं भवितुमर्हति । आदित्यग्रहणस्य सर्वात्मनाऽसंगतत्वाच्चेत्यादि परास्तम् ।

उत्तरम् — स्वास्युक्तमिदं सर्वं समर्थितमेवास्माभिः ।

मणिः — आनन्दमीमांसाया हि न 'स एको ब्रह्मण' इत्यत्र समाप्तिः । किन्तु 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इत्यत्रैवेति 'सैषानन्दस्य' इत्यत्र प्रस्तुत आनन्द एव जीवसूर्योभयान्तर्यामिब्रह्मरूपतया विवक्ष्यते इति न परमानन्दस्यात्र परामर्शायोगः ॥

उत्तरम् — 'स यश्चायं पुरुषे' इत्यस्य जीवान्तर्यामिब्रह्मपरत्वं 'यश्चासावादित्ये' इत्यस्यादित्यान्तर्यामिब्रह्मपरत्वञ्चोच्यतेऽत्र मणिनेति सन्तुष्यामः । तेन च विज्ञानमयंजीवान्तरस्य तदन्यस्यानन्दमयस्य ब्रह्मत्व-

सिद्धिः, जीवादधिकत्वान्यत्वसिद्धिश्च, यथादित्यान्तर्यामिब्रह्मणः आदित्या-न्यत्वसिद्धिः । 'आनन्दमयमात्मानमुपसंक्रम्य' त्यत्रास्त्यानन्दपूर्णानन्दमय-प्रस्तावः । 'आनन्दं ब्रह्मणो विद्वान्' इति श्लोके ब्रह्मसम्बन्धिनिरतिशया-नन्दधर्मप्रस्तावोऽस्ति । तत्रैव आनन्दमीमांसाविश्रान्तिः । 'आनन्दस्य मीमांसे' त्यारंभवाक्ये आनन्दशब्दस्यानन्दधर्मपरत्वमेव । आनन्दमयधर्म-भूतस्यानन्दस्य मीमांसा क्रियते तस्य सर्वोत्कृष्टजीवानन्दातिशायित्व-प्रदर्शनाय निरतिशयत्वप्रदर्शनाय च । 'आप्नोति पर' मित्युपक्रम-ब्राह्मणोक्तं परं निरतिशयानन्दो भवेत् । मन्त्रवर्णे च तस्य सर्वानन्द-समुच्चयत्वं, मुक्तब्रह्मानन्दयोः समानत्वञ्च समुदितम् । इदं सर्वमुप-पाद्यते आनन्दमीमांसया । ब्रह्मनिष्ठायाः फलं तद्गतनिरतिशयानन्द-प्राप्तिरित्युपपाद्यते । प्राप्यस्य ब्रह्मण आनन्दमयत्वं नाम सर्वावयवेषु तस्यानन्दत्वमित्यादिकञ्च तदर्थमेवोच्यते । आनन्दमीमांसा च तदर्थमेव क्रियते । कृत्स्नजगतोऽपि आनन्दमयः शारीर आत्मेति पुनः पुनरत्रोक्तं सुविस्तरं प्रतिपादितं य आत्मनि तिष्ठन्...... य आदित्ये तिष्ठन्' इत्यादिना, जीवसूर्यादिसर्वान्तरात्मभूतामृतपरमात्म-प्रदर्शकशारीरकब्राह्मणस्मारणद्वारा 'स यश्चाय' मिति वाक्येन । शारीरकब्राह्मणप्रत्यभिज्ञापकतदेकार्थतद्वाक्येनानन्दमयपरमात्मनः विश्व-शारीरात्मत्वं दृढीकृत्य अन्नमयादिविज्ञानमयान्तशरीरकानन्दमयात्म-प्रवेशं कीर्तयित्वा, तस्यानन्दमयब्रह्मणो निरतिशयानन्दप्राप्त्या ब्रह्मविदो-भयात्यन्तनिवृत्तिर्निगदिता । 'सर्वस्मात्प्रेयोऽन्तरतरं यदयमात्मा' इति सर्वान्तरपरमात्मनस्सर्वस्मात्प्रियतमत्वरूपनिरतिशयानन्दत्वं श्रुति-प्रसिद्धम् । अत्रापि सर्वान्तरस्य ब्रह्मणः आनन्दमयस्य पूर्णानन्दवत्त्वं प्रदर्शयति श्रुतिः । "स यश्चायं पुरुषे' इत्यत्रानन्दमीमांसाया न समाप्तिरिति सर्वग्रन्थसंप्रतिपन्नम् । निरूपितञ्चास्माभिः । आनन्दस्य मीमांसेत्यत्रानन्दशब्दस्यानन्दधर्मवाचकत्वं दुरपलपम् । भूयो भूयस्त-

दर्थे एवास्यां मीमांसायामानन्दशब्दोऽभिलप्यते तत्तत्पुरुषसंबन्धित्वेन । ब्रह्मसंबन्धिधर्मत्वेनैवात्र ब्रह्मानन्दोऽभ्यस्यते 'ब्रह्मण आनन्दः, ब्रह्मण आनन्दः' इति । 'स यश्चाय' मित्येतच्छ्रुतिमनुसृत्य सूत्रकारोऽपि पुरुषगुहास्थानन्दमयपुरुषस्य ब्रह्मत्वसाधनानुपदमेव, आदित्यपुरुषान्तर्वर्तिहिरण्यगर्भपुरुषविषयविचारमकरोत् अन्तरधिकरणे । हितरमणीयमय आनन्दमयः पुरुषः । उभयोस्सर्वावयवानां हितरमणीयत्वं निगद्यते श्रुत्या । 'स यश्चायं पुरुषे' इति द्विरभ्यस्ता श्रुतिः सौत्राभ्यासहेतुगृहीतत्वेन कथिता महामहोपाध्यायैस्सुगृहीतनामधेयैः कपिस्थलं स्वामिभिः ॥

मणिः (३३) पृ — अत्र पुरुषे सूर्ये आनन्द एकरूपो न सातिशय इति बोधनात्, हिरण्यगर्भान्तानन्दस्यैव तदुपाधितारतम्यप्रयुक्तोत्कर्षापकर्षाभावस्संभवतीति कृत्य 'स एकः' इत्यनेन तस्योत्कर्षापकर्षापोहार्थत्वमाकरे व्यवस्थापितम् ॥

उत्तरम् — अत्र पुरुषे सूर्ये चान्तर्यामी एक इति पूर्वं मण्युक्तार्थ एव श्रुत्यर्थः । तद्विरोधेनात्र वर्णितस्तच्छ्रुत्यर्थो न संगतः । जीवस्यानन्दः सूर्यजीवस्यानन्दश्चैक इत्युक्तिः पूर्वं तत्तदानन्दतारतम्यस्य स्पष्टोक्त्या व्याहता । सर्वोत्कृष्टमानुषानन्दस्य सूर्यदेवानन्दस्य चैकत्वोक्तिर्व्याहता कृत्स्नपूर्वग्रन्थेन । हिरण्यगर्भः सर्वोत्कृष्टजीव इत्युच्यते मणिना । किं सूर्यस्ततोऽपि बृहत्तरः आनन्दवत्त्वे । अत्रोक्तो जीवः क इति पृच्छामः । शास्त्रस्य मनुष्याधिकारत्वात् मनुष्यो भवेत् । सर्वोत्कृष्टमानुषानन्दात् सामान्यजीवस्यानन्दः किं भूयान् भवेत् । अत्र जीवे सूर्ये चैकतयोक्तस्त्वेनाभिमन्यमानः किं निरतिशयब्रह्मानन्दः । ब्रह्मणः खलु तदुभयान्तर्वर्तित्वमुभयसंप्रतिपन्नम् । एकरूपः न सातिशयः' इत्यस्य परस्परसातिशयनिषेधार्थत्वं वा निरतिशयब्रह्मानन्दत्वपरत्वं वा ।

किं लिख्यते स्वेनेत्यजानन्नेव यत्किञ्चिल्लिखति मणिकृत् । वाङ्मनसा-गोचरत्वरूपनिरतिशयापरिच्छेद्यत्वादिकं 'यतो वाच' इति श्लोके निगद्यते, नात्र । तत्रैवानन्दमीमांसा समाप्तिः ॥

मणिः — 'अस्माल्लोकात्' इत्यत्र लोकपदमपि दृष्टादृष्टविषय-समुदायपरमेव । न प्रकृतिमण्डलपरम् । प्रकृतिमण्डलस्यापि दृष्टा-दृष्टसमुदायरूपत्वेनार्थान्तरत्वात् ॥

उत्तरम् — सर्वशब्दानां महत्यस्वारस्ये मज्जति मणिः । 'प्रेत्य' शब्दास्वारस्यमसह्यम् । सर्वश्रुतिषु सर्वतन्त्रेषु, लोके च मरणानन्तरं लोकान्तरगमने तत्प्रसिद्धिः । गतिविषयोऽनुप्रश्नः कृतः इति मणिर्वेदति । तस्यात्र वल्ल्यन्ते मोक्षानन्दप्राप्तिवर्णने उत्तरं दीयते 'अस्मा-ल्लोकात्प्रेत्य' इति । प्रश्नोत्तरत्वस्य तात्पर्यचिह्नत्वं दुरपलपम् । 'अस्माल्लोकात्प्रेत्य' इतीदमभ्यस्यते, अत्र अनन्तरवल्ल्याञ्च । मोक्षप्राप्ति-वर्णने लोकशब्दास्वारस्यम् । 'चिरलोकलोकाना' मित्यत्रैव लोकेषु प्रयुक्तो लोकशब्दः । समानप्रकरणे बृहदारण्यके भूयो लोकशब्दः प्रयुक्तः । एकवचनास्वारस्यम् । 'अस्माल्लोका' दिति पदसमुदायस्य एतल्लोकग्रहणे एव तात्पर्यम् । 'अस्माल्लोकात्प्रेत्य' इति पदसमुदा-यस्यार्थान्तरवर्णनोद्यमः श्रुतिप्रतारणोद्यम एव । श्रुतिहननञ्च ॥

मणिः - (३३) पृ – प्रेत्यपदेन लोकान्तरावाप्तिविवक्षा तु मतान्तर-रीत्या युक्तैव, अन्नमयशरीरप्राप्तेः लोकान्तरप्राप्तिनिरपेक्षत्वात् ॥

उत्तरम् — अस्मन्मतव्याख्यामज्ञात्वैव दूषयति मणिः । सर्व-विशिष्टं सर्वस्य शारीर आत्मा आनन्दमयब्रह्म । 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर' मिति गीतोक्तवत्, उभयविभूतिविशिष्टब्रह्मणि ज्ञानेन प्रवेशासमयोऽयम् । आनन्दमयब्रह्म विश्वशारीरः परमात्मेत्युपपादितम् । 'स य एवं वित्' इति विश्वशारीरपरमात्मानन्दमयब्रह्मविद्यायां निरन्तरं

यावदायुषनिष्ठया सम्पन्नं विज्ञानमनूद्यते । तेन विज्ञानेन सर्वान्नमय-प्राणमय-मनोमय-विज्ञानमय शारीरक परमात्मनि ज्ञानेन प्रवेशोऽत्र विवक्षितः उपसंक्रमणशब्देन । एतमन्नमयमित्यादिपञ्चस्वपि पर्यायेषु एतच्छब्दः परमात्मपरामर्शकः । अन्नमय-प्राणमय-मनोमय-विज्ञानमयशब्दाः तच्छरीरक-परमात्मपराः । "अत्र व्यासार्यैस्सर्वोऽपि विद्वान् अस्माल्लोकात्प्रेत्य अन्नमयादिसमष्टिव्यष्टिविभूतिकं निरतिशयानन्दं परमात्मानं भोग्यभूतं भोक्ता सन् अनुभवतीति प्रश्नस्योत्तरमुक्तं भवतीत्युक्त" मित्यस्मदीयो-पनिषद्भाष्ये । तस्य च मूलभूतं श्रुतप्रकाशिकावाक्यमप्युदाहृतं तत्र । अन्नमयरूपशरीरप्राप्तिर्नास्माभिरुच्यते । अज्ञाननिबन्धनमिदं चोद्यम् ॥

मणिः — एतेनोपसंक्रामतिपदमपि ज्ञानमात्रपरं, न तु प्राप्ति-परमिति व्यख्यातम् । गत्यर्थानां ज्ञानार्थकत्वेन क्लेशलेशस्याप्यभावात् ॥

उत्तरम् — ज्ञानपरत्वमिष्टमेवास्माकम् । ब्रह्मणि ज्ञानेन प्रवेशः परमाकाशे परमव्योमनि । तत्र चार्चिरादिगत्या अतिवाह्यते ब्रह्मवित् । ज्ञानेन प्रवेशः प्राप्तिः । 'उपसंक्रामती' त्यत्र स्वभाष्योक्तं बाधनार्थं परित्यजति मणिरिति सन्तुष्यामः । ज्ञानं प्राप्तिरित्युभयमपि गृह्णीमो वयम् ॥

मणिः — विषयसमुदायान्निरपेक्षो भूत्वा, अन्नमयममुख्यात्मानं जानातीत्युक्ते, प्रस्तुतत्वात् विषयसमुदायमन्नमयात्मना जानातीत्यर्थ-सिद्धिः इति विषयज्ञानमित्यस्याध्याहारोऽप्यस्मद्विवरणे ॥

उत्तरम् - 'अस्माल्लोकात्प्रेत्य' इत्यनेनैव दृष्टादृष्टसर्वविषयसमुदाय-विरागत्यागादीनामुक्तत्वात्, अन्नमयस्य देहस्य, अमुख्यात्मत्वग्रहणं, तत्पूर्वमेव संपन्नमित्यवश्याभ्युपगन्तव्यम् । देहस्यानात्मत्वनिश्चयं विना न तादृशवैराग्यसंपत्तिः । "विषयसमुदायमन्नमयात्मना जानाति' इति वाक्यस्यार्थो न स्फुटः । विषयसमुदायस्यान्नमयाद्यात्मत्वज्ञानं तज्जिज्ञासा च 'स य एवं वित्' इति पूर्वसिद्धत्वेन अनूद्येते ॥

मणिः — एतेन उपसंक्रमणकर्तापि परमात्मैव, न जीव इति व्याख्यातम् । 'स एकः' इत्यैकात्म्यवादस्य श्रुतिसिद्धत्वात् । अन्यस्या नात्मनाज्ञानवर्णनासंभवात् ॥

उत्तरम् – साधकजीवे सूर्यदेवे चान्तरात्मतया स्थितस्य परमात्मनः खल्वेकत्वमुक्तम् । जीवसूर्ययोः परमात्मनोर्भेद एव स्पष्टमुक्तः श्रुत्या परमात्मनस्तदुभयान्तर्यामित्वकथनेन । 'भेदव्यपदेशाच्चान्यः' इति सूत्रं तद्भाष्यञ्च मण्युक्तिघातुकम् । 'भेदव्यपदेशाच्चे'त्येतदधिकरणसूत्रञ्च जीवब्रह्मभेदमेव द्रढयति । अत्र जीवब्रह्मभेदः स्पष्टं श्रूयते । परमात्मनः साधकजीवत्वकथनमुपहास्यम् ॥

मणिः — प्रकरणस्यापि गुहानिहिताभिन्नतया ब्रह्मोपक्रमात्, 'स एक' इत्युपसंहाराच्चात्मैक्यपरत्वेनाद्वैतपरत्वात् ॥

उत्तरम् — 'ब्रह्मवित्' इति ब्रह्मणोवेद्यत्वेन, अधिकारिणो वेदितृत्वेन, 'आप्नोतिपर'मिति जीवस्य प्राप्तृत्वेन, ब्रह्मणः प्राप्यत्वेन-चोपक्रमात्, भेदजटिलत्वमुपक्रमस्य । परशब्दोपि स्वस्मादुत्कृष्टत्वं स्वस्मा-दन्यत्वञ्च वदति । ब्रह्मवित् स्वस्मात् परं परमाप्नोति । 'स एक' इति वाक्येपि तथैव । उभयान्तर्यामि ब्रह्मणः एकत्वोक्त्या जीवादित्ययोर्भिन्नत्वं व्यञ्जितम् । 'आनन्दमयमात्मानमुपसंक्रम्य, तदनुप्रविश्य, आनन्द ब्रह्मणो विद्वान्' इत्यादिष्वपि तथैव ॥

मणिः — अत एव परमात्मन एवौपाधिक जीवभावः प्रतिपादितः उपपद्यते ॥

'तदनुप्रविश्य' इत्यनेनैव भेदः स्फुटं बोध्यते । 'सच्चत्यच्च' इत्यादिना मूर्तामूर्ते प्रत्यक्षपरोक्षे । चेतनमचेतनमित्यादिसर्वभवनमुच्यते । सर्वभवनञ्च तत्तदनुप्रवेशेन । अन्तरात्मतयावस्थानेन तद्भवनमेवा-चेतनेषु । यथाऽचेतनेषु, तथा चेतनेष्वपि ॥

मणिः — 'स य एवं वित्' इति वाक्ये एवंविदित्युपसंह्रियमाणस्य ब्रह्मवित्पदस्यादित्यपुरुषान्तर्वर्त्यैकरूपात्मवित् इत्यर्थकत्वस्यैव युक्तत्वेन तत्रात्मभेदविवक्षायोगात् ॥

उत्तरम् — एवंविदिति पूर्वोक्तसर्वाकारविशिष्टत्वेन आनन्दमयब्रह्मणो वेदनमुच्यते । विश्वस्य शारीरत्वं सर्वान्तरात्मत्वं जगत्स्रष्टृत्वं, सर्वजीवातिशाय्यानन्दत्वं, आनन्दयितृत्वं, स्वनिष्ठया सर्वभयनिवर्तकत्वमित्यादि विशेषाः उक्ताः । उक्तसर्ववैशिष्ट्यं एवंविदिति स्पष्टमनूद्यते । निष्प्रकारस्य सर्वविशेषशून्यस्य वेदनं एवंविदिति किमनूद्येत । विश्वशारीरात्मनो निबिडनिरन्तरध्यानात्, अन्नमयादीनां शरीरत्वनिश्चयात्, अन्नमयादिसर्वविशिष्टमात्मानमुपसंक्रम्य सम्यक् ज्ञात्वा, तस्मिन् प्रविशति । सर्वशारीरात्माकारस्य मुख्यत्वेन तदुपपाद्यते 'स यश्चाय' मिति वाक्येन । तेन च जीवान्तर्वर्तिनः आदित्यान्तर्वर्तिनश्च नियन्त्रात्मनः एकत्वममृतत्वमित्यादिकं श्रावयत् शरीरकब्राह्मणं स्मारितं भवति । दृढेन तद्ज्ञानेनान्नमयादीनां तच्छरीरत्वं' आनन्दमयब्रह्मणस्तदात्मत्वञ्च अनुभूय परमप्रेम्णा उभयविभूतिविशिष्टसर्वान्तरात्मानन्दमय ब्रह्मणि प्रविश्य, वाङ्मनसागोचरमानन्दमयब्रह्मण आनन्दं प्राप्नोतीति स्पष्टं सुन्दरसुन्दरं श्रौतं प्रदर्शनम् । जीवादित्ययोरन्तर्वर्तिनः परमात्मन एकत्वं मण्युक्तमस्मादिष्टमेव ॥

मणिः — ब्रह्मप्राप्तिर्नाम तदज्ञानहानमेव, न तु भेदसापेक्षा गतिरिति पूर्वमेव व्यवस्थापितम् । अन्यथाऽऽत्मैक्यसिद्धान्तविरोधापत्तेः ॥

उत्तरम् — अज्ञानहानमिष्टमेवास्माकम् । प्रमात्मकज्ञानमपेक्ष्यते । जीवस्य परमात्मात्मकत्वस्य सत्यत्वात्, स्वान्तर्याम्यात्मभूतानन्दमयपरमात्मप्राप्तिस्तदविभागेन तदानन्दानुभावः । किं गतिरस्ति वा

न वेति संप्रतिपन्नस्य प्रश्नस्य, अस्तीत्युत्तरस्य स्पष्टवचनेऽपि, अहं नास्तिवादं करोमीति स्वातन्त्र्यमवलम्बमानं कथं वयं रञ्जयेम । आनन्दमयमात्मानं प्राप्य, कामान्नीकामरूप्यनुसञ्चरन्नित्यादिकमुच्यमानं मण्यभिमानं निष्करुणमुन्मूलयति । "ममसाधर्म्यमागताः । स्वर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।' इत्यादिभिर्भूयो भूयो भगवान् मुक्तानां स्वसाधर्म्यप्राप्तिं, आत्मबहुत्वं बहूनां ब्रह्मविदां मोक्षप्राप्तिश्च वदति । आत्मैक्यं रोचयते मणिकृत्, सर्वश्रुतिस्मृतिसूत्राविरोधेन सर्वानुभवविरोधेन च । जीवब्रह्मभेदएवैतदधिकरण सूत्रैः प्रतिपाद्यते स्पष्टं भाष्यद्वयरीत्यापि पुच्छयोजनारीत्यापि ॥

मणिः ( ३४ ) पृ — एतेन – नचात्र प्रकरणेऽज्ञानं ब्रह्मणि तत्कृतप्रपञ्चारोपः आत्मनोऽन्नमयादितादात्म्यभ्रमः, अधिष्ठानज्ञानेन तद्बाधः प्रपञ्चमिथ्यात्वं, ब्रह्मणो निर्विशेषत्वं, आत्मैकत्वं ब्रह्मण एव जीवभावः इत्यादयोभवत्कल्पिताः अर्थाः प्रतिपादिता उपलभ्यन्ते, यद्बलेन सूत्रस्थानीयस्य वाक्यस्य लक्षणादिना अर्थान्तरपरत्वं शंक्येतापि – इत्यादिपरास्तम् ॥

उत्तरम् — स्वाम्युक्तं सर्वं निराबाधमेव ॥

मणिः — 'असद्वा इदमग्र आसीत्' इत्यत्र वाक्येऽज्ञानस्य ब्रह्मणि, तत्कृतप्रपञ्चारोपस्य च प्रतीतेः ॥

उत्तरम् — असद्व्यपदेशस्याव्याकृतनामरूपविशेषाख्यधर्मप्रयुक्तत्वं सूत्रकारप्रदर्शितं 'असद्व्यपदेशान्नेतिचेन्नधर्मान्तरेण' इति । उपनिषद्भाष्ये 'अव्याकृतनामरूप वि[illegible]ष विपरीतरूपं' इति भाषितम् । सूत्रभाष्ये 'व्याकृतनामरूपत्वाद्धर्मादव्याकृतनामरूपत्वं धर्मान्तरं तेन धर्मान्तरेणायमसद्व्यपदेशः' इति भाषितम् । 'असदिवाऽऽसीत्' इतीवार्थत्वं भाषितं श्रौतैवकारस्य श्रीशांकरभाष्ये । सर्वदासत एव प्रपञ्चस्य व्याकृताव्याकृत-

रूपधर्मद्वयेनावस्थाद्वयम् । एतेन प्रपञ्चस्य सार्वदिकसत्वमेव दृढीक्रियते। प्रलयावस्था कस्याऽज्ञानेन कल्प्यते इति पृच्छामः । न तदा अन्तःकरणं, तद्वृत्तयोवासन्ति । कस्यचिदज्ञानेन खलु साऽवस्थाकल्पनीया । अव्याकृतावस्थाकस्या ज्ञानं कल्पयति । सर्वश्रुतिप्रसिद्धं स्रष्टृत्वं ब्रह्मणः । किं तस्येश्वरस्याज्ञानं ज्ञानाच्छादकमस्ति । तस्यैवाज्ञत्वे कस्तस्याज्ञानस्य निवर्तकः । 'आत्मकृतेः परिणामात्' इति सूत्रकारः सूक्ष्मविशिष्टस्य स्थूलविशिष्टत्वेन परिणाममेव स्पष्टं कथयति । कल्पनावादस्य न श्रुतिषु सूत्रेषु वा कल्पनावकाशलेशः । 'इदं सर्वमसृजत, तत्सृष्ट्वा' इति सृष्टिश्रुत्या अध्यारोपवादो बाध्यते । सन्ध्याधिकरणे स्वप्ने ईश्वरस्स्रष्टा इति पूर्वपक्षयित्वा, न सृष्टिः, किन्तु जीवकल्पनामात्रमिति सिद्धान्तः इत्यद्वैतभाष्यम् । सृष्टिर्वा (माया) आरोपोवा इति तत्र विकल्प्यते । सृष्टिशब्दस्यारोपप्रतिकोटित्वं औत्सर्गिकम । सृष्टिः परमात्मनश्चेत् पारमार्थिक्येवस्यादिति तदधिकरणभाषिता व्याप्तिगर्भोक्तिः न्याय्यैव । सृष्टिं कामयित्वा, ततस्तपस्तप्त्वा इदं सर्वमसृजत इति खल्वत्र श्राव्यते । भ्रान्त्यर्थं तपस्तपनोक्तिर्ध्रुवमुन्मत्ता भवेत् । तप्यमानं तपश्च ज्ञानमयं इति श्रुतिः । अज्ञानमूलक आरोपः न तपोमूलको भवेत् । अत्रमणेरारोप पक्षः श्रुत्यक्षरस्पष्टविरुद्धः । प्रलयावस्था, अध्यारोपो वा अपवादोवेति मणिरात्मानं पृच्छतु । अपवादो ज्ञानमूलः, अध्यारोपोऽज्ञानमूलकः । उभयं जीवकर्तृकत्वेनैवाभिमन्यते मणिना । किं जीवकर्तृकः अपवादः प्रलयः । नास्त्यवाधिरसांगत्यस्य । 'सत्यकामः, सत्यसंकल्पः' इति स्रष्टृब्रह्मगुणं वर्णयति श्रुतिः । असत्यकामः ईश्वरः इति मणिमतपक्षः । सर्वथा श्रुतिपरिपन्थित्वमेव तस्य ॥

मणिः — 'अन्योऽन्तर आत्मा, अन्योऽन्तर आत्मा' इति पूर्व-उत्तरोत्तरबोधनेन, आत्मनोऽन्नमयादितादात्म्यमधिष्ठानज्ञान-निबन्धनतद्बाधयोः (अवगमेन) ॥

उत्तरम् — ब्रह्मणो गुहानिहितत्वमुक्तं "योवेद निहितं गुहाया" मिति । गुहाभ्यन्तरे वर्तमानं गूढं ब्रह्मस्थूलारुन्धतीन्यायेन क्रमेणान्तरान्तर-प्रदर्शनेनावजिगमिष्यते । न पूर्वप्रदर्शितस्थूलताराणां मिथ्यात्वं, स्वरूपतो बाध्यत्वं वा । तासु प्रथममवतीर्णसूक्ष्मारुन्धतीबुद्धिमात्रमपनीयते । न तासामरुन्धतीत्वम् । तथा च नान्नमयादीनामानन्दमयब्रह्मत्वमित्येव सिद्ध्यति । तेषां ब्रह्मान्यत्वमिष्टमेव सर्वेषाम् । अन्नमयादीनां मिथ्यात्व-पक्षः स्वोक्तन्यायबाधितः, प्रत्यक्षबाधितः, सर्वश्रुतिस्मृतिसूत्रबाधितश्च । तेषां मिथ्यात्वमस्यामुपनिषदि न केनापि वाक्येन प्रतिपाद्यते । अज्ञाना-त्यन्ताभावसहकृतब्रह्मज्ञानकाष्ठायां लब्धायां मुक्तावपि कामरूपित्वसर्व-लोकानुसञ्चरणानन्दगानादिकं स्पष्टं श्राव्यते । प्रत्यक्षरं जीवब्रह्मादिभेद एव प्रतिपाद्यते । आनन्दमयादन्योऽन्तर आत्माऽत्र नैवोच्यते । तस्यैव सर्वान्तरात्मत्वेन त्रिरभ्यासो दृश्यते । अभ्यासादिति हेतुरेतस्यापि संग्राहकः । नात्राधिष्ठानशब्दो वा आरोपशब्दो वा तत्पर्यायशब्दो वा प्रयुज्यते । आरोपकथा केवलं स्वबुद्ध्यारोपिता ॥

मणिः — 'उदरमन्तरं कुरुते । अथ तस्य भयं भवति' इति भेद-निषेधेन, अभेदबोधनेन ब्रह्मणि प्रपञ्चाभावरूपप्रपञ्चमिथ्यात्वस्य (अवगमेन) ॥

उत्तरम् — ब्रह्मणो निरन्तरध्याननिष्ठाप्रकृता । निरन्तरध्यानस्य अभयप्रतिष्ठालाभोऽत्र फलमुच्यते । ध्यानस्याल्पविच्छेदेऽपि योगात् प्रच्यवो भुवः । "कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति । अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि। एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।" इत्यर्जुनवचनमवधेयम । 'योगाच्चलितमानसः अप्रतिष्ठः' इति तत्र स्पष्टं योगाद्चलनं ब्रह्मणि प्रतिष्ठा, ततश्चलनञ्चाप्रतिष्ठा इत्युक्तम् । अप्रतिष्ठा-तोऽर्जुनस्य भयं प्रदर्शितम । योगान्मनसश्चलने भयं, तदभावे तदभाव इति स्पष्टं प्रदर्शितम् । भगवद्योगस्यैवाभ्यर्हिततमत्वमुपदिदेश भगवान्

तदध्यायान्ते 'योगिनामपि सर्वेषां' इति श्लोकेन । गीतास्पष्टविरुद्धो मणिपक्षः । अत्र योगनिष्ठोपदेशः क्रियते श्रुत्या 'प्रतिष्ठां विन्दते' इति । अन्तरशब्दस्य भेदपरत्वे 'कुरुते' इति न प्रायोक्ष्यत । भ्रान्त्या आरोप्य-कल्पने 'कुरुते' इति वचनस्यानुपपत्तिः स्फुटा । 'योगविच्छेदरूपान्तरं कुरुते' इति तच्छब्दस्वारस्यम् ॥

मणिः — 'सत्यञ्चानृतञ्च सत्यमभवत्' इति वाक्येन ब्रह्मव्यति-रिक्तस्यापारमार्थिकत्वरूपमिथ्यात्वोपपादनद्वारा ब्रह्मणो निर्विशेषत्वस्य (अवगमेन) ॥

उत्तरम् — 'विज्ञानञ्चाविज्ञानञ्चे' ति चेतनाचेतनात्मतया सत्यस्य ब्रह्मणः, तत्तदनुप्रविश्य तत्तन्नियन्तृत्वेन भवनमुक्तम् । 'विज्ञानं चेतनं, अविज्ञानं तद्रहितमचेतनं प्राणादि' इति शांकरभाष्यमस्मद्भाष्य-सममेव । विज्ञानस्य चेतनस्य जीवस्याऽसत्यत्वं नेष्टं परेषामपि । 'विज्ञानञ्चाविज्ञानञ्चे' त्यत्र यथा द्वेधा विभागः तथैव सर्वत्रार्थो ग्राह्यः जीवजडपरत्वेन । 'सत्यञ्चानृतञ्चे' त्यत्र सत्यशब्दस्य जीवपरत्वं असत्यशब्दस्याचेतनपरत्वञ्च स्फुटम् । 'निर्विकारतया सत्यत्वं चेतनस्य इतरस्यत्वतथात्वं' इत्यस्मदुपनिषद्भाष्यम् । शांकरभाष्ये 'सत्यञ्च व्यवहारविषयमापेक्षिकं सत्यं, मृगतृष्णाद्यनृतापेक्षयोदकादि सत्यमुच्यते' । 'अनृतञ्च तद्विपरीतम्' इति भाषितेन, सत्यानृतशब्दयोर्व्यावहारिक-प्रातिभासिकोभयविधाचेतनप्रपञ्चविषयत्वमुक्तम् । अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्' इत्यत्र प्रथमसत्यशब्दस्य जीववाचकत्वं प्रसिद्धम् । सत्यशब्दस्य मिथ्यात्ववाचकत्वस्यात्यन्तास्वरसत्वं स्फुटम् । "यस्मात्सत्यदादिकं मूर्तामूर्तजातं यत्किञ्चेदं सर्वमविशिष्टं विकारजात-मेकमेव सच्छब्दवाच्यं ब्रह्म अभवत्, तद्व्यतिरेकेणाभावान्नामरूपविकारस्य, तस्मात् तद्ब्रह्मसत्यमित्याचक्षते" इति शांकरभाष्यं प्रायेणास्मद्व्याख्यान-

सरूपमेव । "चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्' इति सूत्रप्रदर्शिता अस्मदिष्टव्युत्पत्तिरनया श्रुत्या सिद्ध्यति । "यस्मात् चेतनाचेतनात्मकवर्गानुप्रविष्टतया सत्यशब्दितस्य ब्रह्मणः, अत एव चेतनाचेतनात्मकं जगत्, शास्त्रदृष्टिमन्तः पुरुषाः पराशरादयः हरेर्न किञ्चिद्व्यतिरिक्तमस्ति, 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' इत्याचक्षते इत्यर्थः' इत्यस्मदीयोपनिषद्भाष्यम् । 'तत्सत्यमित्याचक्षते' इत्यत्र 'तत्' इत्यस्य तस्मादित्यर्थो भाष्यद्वयसम्मतः 'इत्याचक्षते' इति श्रुतिः प्रत्यभिज्ञाप्यते 'तद्व्यपदेशः' इति सूत्रखण्डेन । समानाधिकरणव्यपदेशे निमित्तं प्रदर्श्यते श्रुत्या सूत्रेण च । 'व्यतिरेकेणाभावात्' इति शांकरभाष्योक्तमेवास्माभिः 'पृथक् सिद्ध्यभावात्, अपृथक् सिद्धत्वात्' इत्युच्यते । सामानाधिकरण्यव्यपदेशे 'ब्रह्मव्यतिरेकेणाभावादि' ति शांकरभाष्यसंमतहेतुः, 'अपृथक् सिद्धत्वात्' इत्यस्मद्धेतुः । "तदनन्यत्वात् तद्व्यपदेशः । तदनन्यत्वाधिकरणारंभे तस्मात् कारणात् व्यतिरेकेणाभावः कार्यस्य' इति श्रीशांकरभाषितमस्मदिष्टमेव । ब्रह्मणः पृथक्त्वेन जगत्सिद्धिरस्मदनिष्टा । ब्रह्माधीनतयातदपृथक्त्वेनैव जगत्सत्ता । एतद्विषयोपपादके असद्वेत्यनन्तरश्लोके 'असदिवासीत्' इति प्रपञ्चस्य प्रलयेऽपि मिथ्यात्वं नेति स्पष्टीकृतं इवार्थवचनेन । 'ततो वै सदजायत' इति जातस्य प्रपञ्चस्य सत्त्वोक्त्या मिथ्यात्वं स्पष्टं प्रतिषिद्धम् । 'कथमसतस्सज्जायेत" इति श्रुतिरपि जातस्य जगतस्सत्त्वं द्रढयति । प्रलयकालेऽसत्त्वनिराकरणेन तदानीमपि सत्त्वं स्पष्टं दृढीकृतं श्रुत्या ॥

मणिः — 'स यश्चायं पुरुषे' इत्यात्मैकत्वस्य (अवगमेन) ॥

उत्तरम् — इदं मिथ्या । पुरुषादित्यजीवयोर्भेदः तदुभयत्रावस्थितस्य नियन्तुः परमात्मन एकत्वञ्चोक्तं श्रुत्या । आदित्यान्तर्वर्तिब्रह्मणः यथा स्वविशेषत्वं संप्रतिपन्नं, तथा साधकपुरुषान्तर्वर्तिनः आनन्दमय-

परमात्मनोऽपि सविशेषत्वं सगुणत्वमित्यनया श्रुत्याऽकम्पनीयतया सिद्ध्यति उभयोरेकत्वश्रवणात् ॥

मणिः — 'तत्सृष्ट्वा तदेवानुप्राविशत्', 'यो वेद निहितं गुहाया' मिति ब्रह्मणो जीवभावस्य (अवगमेन) ॥

उत्तरम् - 'तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य, सच्चत्यच्चाभवत्' इति श्रुत्या अनुप्रविश्य (आत्मत्वेन) अवस्थितस्य तत्कार्यभवनं तत्कार्यव्यपदेशश्च इति स्पष्टीभवति । इयं श्रुतिः चेतनाचेतनोभयविधप्रपञ्चसाधारणी । यथा ब्रह्मणो न वस्तुतो जडप्रपञ्चभावः, यथा न जडैक्यं, तथा न तस्य जीवभावो जीवैक्यं वा । 'अश्मादिवच्च तदनुपपत्तिः' इतीदमेवस्पष्टीकृतं सूत्रकृता भेदश्रुतिप्राबल्यनिर्धारणेनेतरव्यपदेशादिकरणे । 'ईश्वरस्य च संसार्यात्मत्वे ईश्वराभावप्रसङ्गः, ततः शास्त्रानर्थक्यम्' इति परिचोद्य, 'न हीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यते इत्यभ्युपगच्छामः' इति समाहितं आत्मत्वोपासनाधिकरणभाष्ये । तेन चात्रेश्वरस्यैव जीवभावोक्तिरुन्मूलिता । स्वभाष्यहननात् न त्रस्यति मणिः । आत्मघात एव ततः फलति ॥

मणिः — (३५) पृ - तद्भावापत्तेर्विवक्षितत्वात् पर एवात्मा संक्रमिता, संक्रमितुरेव संक्राम्यत्वं हि नित्यमाप्तस्यैवानाप्तत्वभ्रमनिवर्तनेनैव ॥

उत्तरम् — ब्रह्मवेदनेन जीवस्य संसारित्वनिवृत्तिरद्वैतमतम् । ब्रह्मैव संसरी, स एवाधिकारी साधकः इत्युक्तेरसाङ्गत्यं स्फुटम् । ब्रह्मण एव बद्धशुद्धसंसारित्वं वदन्तः ब्रह्म ब्रह्मविद्याञ्च सम्यङ्मानयन्ते । शुद्धिप्रार्थनासम्भाविताहार्यक्रोधकालुष्यरूपाशुद्धिमप्यसहमानो मणिः ब्रह्मण एव अनन्ताशुद्धिसहितसंसारिभावं वदति । शुद्धाशुद्ध्योरीशानीशयोरेकत्ववादः उक्तिमात्रव्याहतः, वह्निशैत्योक्तिरिव, स्वमातृवन्ध्यात्वोक्तिरिव च ॥

मणिः — उपासनासाध्यत्वे मोक्षस्यानित्यत्वमापद्येत ॥

उत्तरम् — उपासनप्रसन्ननित्येश्वरप्रसाध्यः संसारध्वंसः इति श्रुतिर्वदति । संसारध्वंसरूपाभावस्य जन्यत्वेऽपि नित्यत्वम् । शब्दैकसमधिगम्ये मोक्षफले युक्तेरप्रसरं सूत्रकारः — 'शब्दात्, शब्दात्' इति अन्त्यपादे पुनः पुनः पठन् सूचयति । रत्नप्रभापि तथैव वदतीति पूर्वभागविमर्शे प्रदर्शितम् ॥

मणिः - आत्मभावो हि मोक्षः । स हि जीवब्रह्मभेदपक्षे नानुकूलः ॥

उत्तरम — जगद्व्यापारवर्जमपहतपाप्मत्वादिसत्यसङ्कल्पत्वान्तरूपब्रह्मसाधर्म्यरूपब्राह्मरूपसहितशुद्धचैतन्यस्वरूपत्त्वेनाविर्भूयब्रह्मणा सहाविभागेनावस्थाय तत्समानानन्दानुभवो मोक्ष इति श्रुतिसूत्रमतम् । ब्रह्मप्राप्तिस्ततस्तदविभागावस्थितिश्च मोक्षः । परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते इति श्रुतिः । उपसम्पत्तिः प्राप्तिः । 'गन्धारानेवोपसम्पद्यते' इति सद्विद्यायाम् । 'उपसम्पद्यते' इत्यस्य प्राप्तिरेव स्पष्टोऽर्थः । 'मुक्तोपसृप्यत्वव्यपदेशात् च' इति सूत्रे मुक्तप्राप्यत्वं ब्रह्मणः स्पष्टं सूत्रितं हेतूकरणेन । भेदं विना न प्राप्तिसंभवः । अत्र 'आप्नोति पर' मिति परब्रह्मप्राप्तिरेवोक्ता उपक्रमे । 'आनन्दमयमात्मानमुपसंक्रामति' इत्युपसंहारे च परानन्दप्राप्तिरुक्ता । 'आनन्दमयमात्मानमुपसंक्रम्य इमाल्लोकान्कामान्नीकामरूप्यनुसञ्चरन्' इत्यादिवाक्यं, 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतिसमानार्थकम् । ब्रह्मप्राप्य, ब्राह्मरूपेणाविर्भवति । ब्राह्मरूपञ्चचितितन्मात्रत्वे सति जगद्व्यापारवर्ज ब्राह्मैश्वर्यवत्त्वम् । शुद्धचैतन्यरूपत्वे सति तदैश्वर्यवैशिष्ट्यम् । 'सम्पद्याविर्भावः स्वेनशब्दात्' इति सूत्रं ईदृशश्रुतिः परामृशति । जीवब्रह्मभेदे सत्यप्यविभागः इत्यादिकं निर्णीयते ॥

मणिः — 'सोऽश्नुते सर्वतः ब्रह्मभावमापन्नस्सन् सह – युगपत् सर्वानन्दानुभवतीत्येतत्परत्वमेव' ॥

उत्तरम् — एतद्वाक्यार्थः पूर्वमेव विस्तरेण विवृतः । उपक्रम-मन्त्रवर्णस्थं मोक्षफलवाक्यमिदमेव, 'एतमानन्दमयमात्मानमुपसंक्रम्य इमाल्लोकान्कामान्नीकामारूप्यनुसञ्चरन् । एतत्सामगायन् आस्ते । हा वुहा वुहा वु' इति विव्रियते इति स्फुटं, परसम्मतञ्च । परमात्मानं प्राप्य सर्वलोकेषु सञ्चरणगानाद्यानन्दपरीवाहानुभवः स्पष्टं श्राव्यते । ब्रह्म-प्राप्तिश्च स्पष्टं श्राव्यते । आनन्दमयस्यैव परमात्मत्वं श्राव्यते । तदन्तर आत्मा न कोऽपि श्रावितः अत्र वा पूर्वत्र वा । उपक्रमपठितफलवाक्यस्य श्रुत्यैव विवृतत्वे सति, तद्विरुद्धत्वेन मण्युक्तं विवरणं न केनापि रसिके-नाद्रियेत । फलश्रुतिवाक्यस्य तदभिमतरीत्याऽर्थवर्णनमशक्यम् । संस्कृतभाषाव्युत्पत्तिमद्भिरुपहसनीयं तत् ॥

मणिः — तथा च तदानुगुण्येन 'अस्माल्लोकात् प्रेत्य' इत्यादीना-मपि पूर्वोक्तविषयार्थवर्णनमेव युक्तम, न तु कर्मानुभवस्थानात् लोकात्पर-लोकं प्राप्य, अन्नप्राणमनोजीवविशिष्टमानन्दमयं दिव्यमङ्गलविग्रहविशिष्टं परमात्मानं वासुदेवं उपसम्पद्य मुक्तबन्धो भवतीत्यर्थकत्वम ॥

उत्तरम् — तदानुगुण्येनेत्युक्त श्रुत्यानुगुण्यं मिथ्यैकान्तम् । मन्त्र-वर्णाक्षरविरोधः, श्रुतिनिजव्याख्याविरोधः संस्कृतभाषास्वभावविरोधश्च सुस्फुटः । 'अस्माल्लोकात्प्रेत्ये' ति श्रुतेः प्रत्यक्षरविरुद्धमन्यथावर्णनं अन्याय्यमेव । गतिविषयः प्रश्नः कृत इति सम्प्रतिपन्नम् । तदस्तित्व-मत्र स्पष्टमुच्यते श्रुत्या तत्प्रश्नोत्तरत्वेन । इदञ्च द्विरभ्यस्यते वल्लीद्वयेऽपि मोक्षप्राप्तिवर्णने । 'अभ्यासे हि भूयस्त्वमर्थस्यानुपचरितत्वं' इति भामती । अत्राभ्यासेन स्पष्टश्रावितगतेः उपचरितत्ववर्णनं श्रुतिद्रोहः । "इमाल्लोकान्कामान्नीकामरूप्यनुसञ्चरन्" इति मुक्त्यनन्तरं परमात्मसङ्कल्प-सहभाविस्वसङ्कल्पानुसारेण परमात्मव्यापाररूपलोकोद्धारणरूपकैङ्कर्य-निर्वहणाय इममेव लोकं पुनरागत्य, अकर्मवश्यमुक्तस्वस्वभावमजहदेव

कामरूपी अनुसञ्चरतीति स्पष्टं श्राव्यते । अकर्मवश्योऽपि, कर्मकृतजन्मरहितोऽपि, अव्ययात्मा सन्नपि, विमुक्तसर्वबन्धोऽपि, स्वराट् सन्नपि, मुक्तरूपां स्वां प्रकृतिं (स्वस्वभावं) अधिष्ठाय, आत्मसङ्कल्पेन (आत्ममायया) लोकपरित्राणार्थं इहावतरति इत्युपदिश्यते श्रुत्या। यथा परमात्मा। "अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवात्ममायया" इति गीतानुसारेण अस्मिन् लोक एव कार्यरूपी अवतरति सञ्चरति गायति च, तथा तत्साधर्म्यशीलाः मुक्ताः तत्सङ्कल्पानुसारि स्वसङ्कल्पेन यथेष्टमत्रावतीर्य परमात्मानमवतरन्तमनुसरन्ति। अस्माल्लोकात्प्रेत्यापि पुनरपीमं लोकं प्रति मुक्त्यनन्तरं स्वेच्छयाऽऽगमनं सम्भवतीति श्रुतिरसः ५ 'सङ्कल्पादेव', 'भावं जैमिनिः विकल्पामननात्', 'उभयविधं बादरायणोऽतः', 'जगद्व्यापारवर्ज' मित्यादिसूत्रैरिदमेव सुस्पष्टं निर्धारितम। भूमविद्यायामाम्नातः 'स एकधा भवति द्विधा भवति' इति विग्रहब्रह्मत्वेन बहुधा भवनरूपविकल्पः ॥

मणिः (२६) पृ – मुक्तानां धर्मभूतज्ञानद्वारा। सर्वजगत्समीपप्राप्तेः क्रमिकत्वाभावेन तथाऽर्थवर्णनस्याऽसांप्रतिकत्वात् ॥

उत्तरम् — इदं चोद्यमस्मदर्थाऽग्रहणान्यथाग्रहणनिबन्धनम्। यावः क्रमिकत्वं प्रसिद्धम्। एकस्मिन्क्षण एव सर्वान्नमयप्राणमयमनोमयविज्ञानमयविशिष्टं एतद्विद्योपासितं अन्नमयादिविश्वशारीरमानन्दमयं परमात्मानं ज्ञानेन प्राप्य प्रविश्य मुक्तिफलमनुभवति। मुक्तिफलं, उपासितब्रह्मणः यो निरतिशयानन्दः, तत्समानानन्दानुभवः शाश्वतिकः यतो वाच इति श्लोकोक्तः, 'इमाल्लोकान्कामान्नीकामरूपी' इत्येतद्भृगुवल्लीवाक्योक्ता प्राप्तिश्चेति स्पष्टीकृतम। इदं सर्वमानन्दमयपरमात्मप्राप्त्यनन्तरमेव भवतीति स्पष्टं श्रावितं वल्लीद्वयवाक्यैः। "यद्वा विद्वान् अस्माल्लोकात् ब्रह्मलोकं प्राप्य ब्रह्मविभूतिभूतमन्नमयाद्युपलक्षितं

सर्वमचेतनप्रपञ्चं विज्ञानमयपदवाच्यं सर्वचेतनजातं, आनन्दमयं परमात्मानञ्च मुक्तसर्वकर्मबन्धो विश्वव्यापिना धर्मभूतज्ञानेनोपसंक्रामति निरतिशयानुकूलतयानुभवतीत्यर्थसंभवात्' इति (४१) पृष्ठे स्वाम्युक्तमपीहावधेयम् । एकक्षण एव सर्वं विषयीकरोति मुक्तज्ञानम् । 'प्रदीपवदावेशस्तथा हि दर्शयति' इति सूत्रेणेदमपि व्यञ्जितम् । 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति भूमविद्या ॥

मणिः — सत्यं 'आवृत्तिरसकृदुपदेशात्' आप्रयाणात्तत्रापि हि दृष्टम्' इति सूत्रप्रतिपादिता आवृत्तिः शब्दात् इत्यनावृत्तिर्यतोऽन्तिमाधिकरणेन स्थापिता तत्साधनविषयैव ॥

उत्तरम् — प्रयाणान्तमावृत्तब्रह्मविषयपरमप्रेमरूपचिन्तासन्ततिः मोक्षोपाय इति स्पष्टं सूत्रितं साधनाध्यायशेषत्वेन संप्रतिपन्नेष्वावृत्त्यद्यधिकरणेषु । मुक्तिफलकोपासनं प्रस्तुतं मुक्तिफलसूत्रे । आप्रयाणमावृत्तेरुपायत्वे स्पष्टं सूत्रिते, श्रुतिसूत्रविरुद्धं स्वमतिमात्रेण अनावृत्तस्य कस्यचित् ज्ञानस्य मोक्षसाधनत्वोक्तिर्न श्रद्धेया । "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेयपुनर्जन्म न विद्यते" "मामुपेत्य पुनर्जन्मदुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानस्संसिद्धिं परमांगताः ॥" इति परब्रह्मप्राप्त्यनावृत्त्योरैकाधिकरण्यं स्पष्टं गीतमभ्यस्तञ्च । ब्रह्मचिन्तावृत्त्या, अनावृत्तिर्लभ्यते इति सौत्रं रसप्रदर्शनम् । अनावृत्तसाधनेनाऽऽवृत्तिरेव लभ्येति रसध्वनिः । अनावृत्तिसूत्रं न साधनज्ञानवृतिं वक्ति यथा मणिर्भ्रमतीव ॥

मणिः — अनावृत्तिस्तु 'न स पुनरावर्तते' इत्यादि श्रुत्या जगद्व्यापारवर्जकार्यब्रह्मभावः उपासनासाध्य एव बोध्यते, यत्र गत्यागत्योस्संभावना, न तु परब्रह्मभावे ॥

उत्तरम् — कार्यब्रह्मभावः इत्यस्य कोऽर्थः । यदि कार्यब्रह्मैवायमुपासको भवेत्, कथं तस्य जगद्व्यापारवर्जत्वम् । कार्यब्रह्मणाभोगसाम्यञ्च । जगद्व्यापारवर्जकार्यब्रह्मभावः उपासनासाध्य इति मण्युक्तौ, कतिषुचिदंशेषु कार्यब्रह्मसाधर्म्यं क्वचिन्नेत्येव कार्यब्रह्मभावशब्दार्थं उक्तो भवति । भोगमात्रे साम्यं, ऐश्वर्ये संकोचः । एतद्रीत्या परब्रह्मभाव इति शब्दस्य क्वचित्साधर्म्यं क्वचिन्नेत्येवार्थो ग्राह्यः । तदेव वयं वदामः । ब्रह्मभावशब्दस्यायमेवार्थो ग्राह्यः इति मण्युक्त्यापि स्पष्टीभवति ॥

मणिः — तथा च तेन सूत्रद्वयेन गौणमुक्तिसाधनस्यैव विचारात्, न मुख्यमुक्तिसाधन ज्ञानविषयत्वमप्यस्य सूत्रस्य ।

उत्तरम् — वेदनशब्दस्योपासनशब्दैकार्थत्वं सिद्धान्तितं सूत्रकृताऽऽवृत्त्यधिकरणे । ब्रह्मप्रत्ययावृत्तेर्मोक्षसाधनत्वमुक्तं तत्र । प्रयाणकालावधिकत्वमावृत्तेर्निर्धारितमाप्रयाणाधिकरणे । आत्मत्वोपासनाधिकरणेऽहं ग्रहः शिक्षितः । "अहं ग्रहोपासनेषु सगुणनिर्गुणसाक्षात्कारफलेषु आवृत्त्यानुष्ठानमित्यधिकरणार्थमुपसंहरति" इति, आवृत्त्यधिकरणनिर्णीतार्थः कथितः आनन्दगिरिणा । निर्गुणज्ञानस्याप्यावृत्तिः सूत्रिताऽऽवृत्तिसूत्रेणेत्यानन्दगिरिः । "श्रवणमनननिदिध्यासनान्यावृत्त्यानुष्ठेयानीत्युक्त' मिति पूर्वाधिकरणार्थमनुवदत्यानन्दगिरिरनन्तराधिकरणारंभे । निर्गुणवेदनविषयेऽपि श्रवणमननादयस्सन्त्येव । तेषामावृत्तेः साक्षात्कारसाधनत्वं कथितमावृत्त्यधिकरणे इत्यानन्दगिरिः । आवृत्त्याधिकरणस्य सगुणोपासनमात्रपरत्वमिति मण्युक्तिः, आनन्दगिर्युक्तिभिर्निहता भवति । उपासनानात्मिका ब्रह्मविद्यैवनास्तीति सूत्रकारसिद्धान्तः । अमूला निर्गुणकल्पना । निर्गुणज्ञानस्याप्यावृत्त्यपेक्षत्वस्य, आवृत्त्यधिकरणसिद्धान्तितत्वेनाद्वैतग्रन्थैरुक्तत्वेन, तद्विरोधेनात्रमण्युक्तं स्वमतविरुद्धम् ।

आवृत्त्यधिकरणोक्तोपासनरूपमोक्षसाधने 'कथं प्रत्ययावृत्तिः कर्तव्या" इत्याकांक्षायामात्मत्वोपासनाधिकरणमवतीर्णम् । 'आत्मत्वमतिरीश्वरे कार्या' इति आनन्दगिरिः अनन्तरतृतीयाधिकरणारंभे पूर्वाधिकरणार्थमनुवदति ॥

मणिः — 'सोकामयत' इत्यादिना प्रपञ्चसृष्टिं, तत्सत्यमित्याचक्षते' इत्यनेन ब्रह्ममात्रस्य सत्यत्वञ्चोक्त्वा, सत्यस्य ब्रह्मण एव व्यावहारिक प्रातिभासिकरूपेण भानं, 'सत्यञ्चानृतञ्च सत्यमभवत्' इत्यनेन प्रतिपाद्यानन्तरं प्रवृत्तं 'असद्वा इदमग्र आसीत्' इति ॥

उत्तरम् — 'सत्यकामः सत्यसङ्कल्पः' इति स्पष्टश्रावितगुण विशिष्टब्रह्मणः सृष्टिकामस्याऽसत्यविषयत्वोक्तिः श्रुतिप्रतिषिद्धा । 'सत्यञ्चानृतञ्चे' त्यत्र सत्यशब्दस्य मिथ्यात्वार्थकत्वोक्तिरुपहास्या । एकस्मिन्नेव वाक्ये सत्यपदस्य विरूपार्थवर्णनं न न्याय्यम्। श्रुतेस्स्वरसार्थश्च पूर्वमेवोक्तः ।

मणिः — अत्र चाभिव्यक्तनामरूपात्मकस्य प्रपञ्चस्य सृष्टेः पूर्वमसद्रूपत्वं, ततः सद्रूपत्वञ्च प्रतिपाद्यमानं तदैवोपपद्येत, यदि सद्रूपेणाज्ञातं ब्रह्म सृष्टेः प्रागासीत् । सृष्टिकाले तु ब्रह्मणः सद्रूपेणग्रहणे ततो जायमानः प्रपञ्चोऽपि सद्रूपोऽभवत् । यथा रजतं ज्ञायमानेदंरूपेण भवति इति प्रक्रियाऽत्रविवक्ष्यते ॥

उत्तरम् — प्रपञ्चस्यानन्दमयाब्रह्मात्मकत्वमुपपिपादयिषितं तदात्मकस्य जगतोऽपि वस्तुतः आनन्दब्रह्मस्वभावभूतानुकूल्योपपादनेन । यथा आनन्दमयस्य प्रियत्वमेव तथा तदात्मकस्य प्रपञ्चस्यापि स्वतः प्रियत्वमेवेत्युपपाद्यते । इदं पूर्वमेवविस्तरेणोक्तमस्माभिः । ब्रह्म सर्वप्रपञ्चस्य परमः सर्वान्तरः आत्मा, तदाश्रितः तदधीनः तन्नियाम्यः तदात्मकः सर्वोऽपि प्रपञ्चः इत्युपपाद्यते । जगतो ब्रह्मात्मकत्वस्य सत्यत्वमेवेति

स्पष्टमसकृदभ्यस्तं पूर्वाधिकरणविचारितया सद्विद्यया, "ऐतदात्म्यमिदं सर्वं तत्सत्य" मिति । तच्छब्देन जगतो ब्रह्मात्मकत्वस्य सत्यत्वं रभ्यस्तं श्रुत्या । परमात्मनस्तस्य विश्वात्मत्वमप्यभ्यस्यते 'स आत्मा, स आत्मा' इति । शरीरस्याभावे आत्मशब्दार्थलोपो ध्रुवः । एतत्पद-वाच्य प्रपञ्चाभावे अभ्यस्तस्य ऐतदात्म्यस्याऽसिद्धिः । श्रोतुरपि ब्रह्मात्मक-त्वमुपदिश्यते 'तदि' ति ऐतदात्म्यं परामृश्य 'तत्त्वमसी' ति । न त्वं स्वनिष्ठः स्वाधारः नापि स्वात्मकः किन्तु ब्रह्माधारः ब्रह्मात्मकः । आत्म-नस्तवाप्यन्तरात्मा सः । तस्मात्पृथक्, तं विना तव सत्तैव न सिद्ध्येत् । तदपृथक्त्वेनैव तच्छरीरत्वेनैव तव सत्ता, यथा सर्वजगतः । तदात्म-कत्वेनैव त्वमसि । तद्विरहेण त्वं नासि । पुत्रं सन्तं चिकीर्षति पिता सद्ब्रह्मात्मकत्वज्ञानेन स्वात्ममात्रत्वबुद्धिहानेन च । "तत् त्वं" इत्युक्त्यैव, असिप्रयोगं विनैव असिशब्दस्य तदर्थस्य च लाभात् असिशब्दप्रयोगः इममर्थं अवगमयतीति रसिकैर्भाव्यम् ॥

'स आत्मा' इति शारीरत्वकथनेन तस्य 'इदं सर्वं' मिति पूर्वोक्तस्य कृत्स्नस्य प्रपञ्चस्य तच्छारीरत्वं प्रदर्श्यते । चेतनानामपि तच्छरीरत्वमेव तत्रोच्यते । तत्र 'स आत्मा' इत्यभ्यासवत् अत्रापि 'तस्यैष एव शारीर आत्मा' इत्यभ्यस्यते । आत्मशब्दः शरीरिवाची-त्यात्मशब्दार्थविवरणमपि क्रियतेऽत्र 'शारीरः' इति । सद्विद्यायां सतो ब्रह्मणः आनन्दमयत्वं न स्पष्टमुक्तं, नापि तदात्मकस्य प्रपञ्चस्य स्वत आत्मभूतब्रह्मस्वभावत्वरूपमानुकूल्यं यन्नित्यं भाति मुक्तस्य । अत्र तदुभय-मुपपाद्यते । अस्यां विद्यायामुपदिष्टमानन्दमयत्वं सर्वासु विद्यासूप-संहरणीयमिति श्रुतेराशय इति सूत्रकारेण निर्णीतं, सर्वसंप्रतिपन्नञ्च । कार्यस्य जगतः सुकृतत्वमत्रोपपाद्यते । वस्तुतोनदुष्कृतत्वं जगतः । प्राणिदुष्कृतात् तस्य दुःखतानुभावः । कार्यस्य जगतोऽपि स्वभावत आनन्दमयत्वोपपादनेन कारणस्यानन्दमयसंज्ञत्वं निगदितं श्रुत्या ।

आनन्दमयस्य तस्य प्रियैकशिरसः जगदुद्धरण कामनया स्वस्य जगदानन्दयितृत्वसिद्ध्यै नामरूपव्याकरणरूपसृष्टिप्रवृत्तिरिति निपुणं व्यज्यते 'सोकामयत' इति । तपस्तप्त्वा इदं सर्वमसृजत' । काप्रत्याशाचिदचित्प्रपञ्चस्यमिथ्यात्वकल्पनामनोरथस्य, सृष्टेः भ्रान्तिरूपत्वकल्पनाया वा । न जातु कश्चित् भ्रान्तिजन्यर्थं तपश्चरेत् । किमिदं सर्वज्ञस्य ब्रह्मणः शोभनं भवेत् । "'तदैक्षत, सोकामयत' इत्युक्तं, न "तत् बभ्रामेति" इति श्रुतप्राशिका । सद्विद्यायामत्र च 'इदं सर्वे' मिति ब्रह्मशरीरभूतचेतनाचेतनप्रपञ्चोनिर्दिश्यते, न ब्रह्म । इदानीं जगत्पश्यन्तो वयं, इदं स्वतन्त्रं, स्वात्मकं स्वनिष्ठं, इति मन्यामहे । परमात्मभूतस्य शारीरात्मनोऽग्रहणात् । तदात्मभूतनियन्तृब्रह्माश्रितत्वं, तदत्यन्तताद्धीन्यञ्च न प्रतीमः । तत्त्वभूतं जगतो ब्रह्माश्रितत्वमुपपादयितुं प्रलयावस्थायामसत्त्वकल्पावस्थस्य जगतः, असद्व्यपदेशार्हस्य ब्रह्माश्रितत्वमेवासीदिति प्रदर्शयति श्रुतिः । न परस्पराश्रयत्वं स्वाश्रयत्वं वा जगद्गतचेतनाचेतनानाम् । किन्तु सर्वेषां ब्रह्माश्रितत्वमेव तदा स्फुटमिति श्रुतिः कथयति, इदानीमपि ब्रह्मण एव सर्वजगदाश्रयत्वमिति स्पष्टावगमाय । यथा ब्रह्मैवात्मा जगतः प्रलये तथेदानीमपि 'प्रपञ्चस्य सृष्टेः पूर्वमसत् रूपत्व' मिति मण्युक्तिर्वितथा । प्रलये जगतः असत्त्वं निषिध्यते सद्विद्यायां, सत्त्वञ्चोद्घुष्यते । प्रलयेऽसत प्रपञ्चस्य के जीवाः कल्पका इति पृच्छामः : 'कल्पकस्तत्र मृग्यः' इति सारावलीगानम् । "यदि सद्रूपेण अज्ञातं ब्रह्मसृष्टेः प्रागासीत्' इति मणिः ।" इदानीं ब्रह्म ज्ञातं किं इति पृच्छामः । सृष्टेः पूर्वं केनाज्ञातं ब्रह्मासीत्, इदानीं केनज्ञतं ब्रह्मास्ति । 'सृष्टिकाले तु ब्रह्मणः सद्रूपेण ग्रहणे ततो जायमानः प्रपञ्चोऽपि सद्रूपोऽभवत्' इति मणिः । सृष्टिसमये सद्रूपेण केनागृह्यत । ब्रह्मणस्सद्रूपेण ग्रहणं ब्रह्मग्रहणमिति वक्तव्यम् । कस्य तथा ग्रहणेन प्रपञ्चोजायत । किमिदमसांगत्यम् । 'असदेव' इत्यस्य

असदिव इति शांकरभाष्यार्थः । एवकार इवार्थः । प्रसिद्धो नैघण्डुकश्च सोऽर्थः । 'असदिवे' ति कथनेन प्रपञ्चस्य प्रलयेऽपि सत्त्वमेव दृढीक्रियते । तस्मात् कदापि नासत्त्वं प्रपञ्चस्य ॥

मणिः — ( ५० ) पृ – जगद्व्यापारेणसाकं ब्रह्मभावः परममुक्ति-रित्येव सूत्रकाराशयः ।

उत्तरम् — निर्गुणमुक्तस्य जगत्स्रष्टृत्वाद्यैश्वर्यमस्तीति मण्याशयो विपरीतैकान्तः । न निर्गुणब्रह्मणोऽपि जगत्स्रष्टृत्वं, सगुणेश्वरस्यैव तत् । निर्गुणस्य निष्क्रियस्य कर्तृत्वमेव नास्तीति परे । किमुतजगत्सर्गकर्तृत्वम् । "ब्रह्मात्मावगतौ सर्वकर्तव्यता हानिः", "क्रियासमवायाभावाच्चात्मनः कर्तृत्वानुपपत्तेः", "सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत्", "अपास्त-समस्तविशेषमेव ब्रह्मोपदिश्यते" इत्यादीन्यद्वैतभाष्यादिवाक्यानि निर्गुण-मुक्तस्य निष्क्रियत्वमेव वदन्ति । निर्गुणमुक्तस्य जगत्स्रष्टृत्वमस्तीति भाष्यादिप्राचीनग्रन्थेषु कुत्रोक्तमिति पृच्छामः । निर्गुणब्रह्मणः एकस्य अद्वितीयस्य जगत्स्रष्टृत्वोपपादनमेव दुःशकम् । अनेकेषां मुक्तानामपि जगत्स्रष्टृत्वोपपादनोद्यमः अत्यन्तदुःशकः । जगद्व्यापारसूत्रोक्तहेतुद्वयं सगुणेश्वरस्य जगत्स्रष्टृत्वादिकं साधयतीति संप्रतिपन्नम् । जगत्सृष्टिरूप-जगद्व्यापारस्य निर्गुणमुक्तसाधारणत्वे सौत्रहेतुद्वयस्यानैकान्तिकत्वमेवा-पतेत् । सगुणेश्वरप्रकरणात्, अन्येषां मुक्तानामसन्निहितत्वाच्चेति सौत्र-हेतू किं नानैकान्तिकौ भवेताम्, मुक्तविशेषाणां निर्गुणमुक्तानां साध्यधर्म-विशिष्टत्वे । "जगद्व्यापरस्तु नित्यसिद्धस्यैवेश्वरस्य तस्य तत्प्रकृतत्वात् तदितरत्वाच्चेतरेषां" इति शांकरभाष्येण मण्युक्तं निरस्तं भवति । "स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि" इति सूत्रशांकरभाष्येणापि तत्सुनिरस्तम् । "संपन्नः केवलोमुक्तः" इति परिमलग्रन्थः, संपत्ति-शब्दस्य निर्गुणमुक्तिरूपकेवलब्रह्मसंपत्तिमर्थत्वेन वदति । "कथं पुनर्मुक्तस्य

अनेकशरीरावेशादिवैलक्षण्यमैश्वर्यमभ्युपगम्यते, यावता "तत्केन कं पश्यते विजानीयात्, 'न तु तद्वितीयमस्ति, ततोऽन्यद्विभक्तं यद्विजानीयात्, 'सलिल एकोद्रष्टा अद्वैतो भवति" इति चैवं जातीयकाश्रुतिर्विशेषविज्ञानं वारयति इत्यत उत्तरं पठति" इति तत्सूत्रावतारिका । संपत्तिः कैवल्यम् । तामवस्थामपेक्ष्यैतद्विशेषसंज्ञाभाव वचनं, 'न प्रेत्यसंज्ञास्तीत्यादिकम् ॥

भूयः परिश्रान्ता वयं मणिक्षुद्रप्रश्नोत्तरदान व्यापारेण । एतावत्पर्यन्तमस्मदुक्तैरेव हेतुभिः शेषः कृत्स्नोऽपि मणिग्रन्थः उत्तरीत एवा ॥




गीताञ्जलि मुद्रालय, नवसालनगरी ।

श्रीः ।

# विशुद्धिपत्रिका ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १ | शाफथ | ... शापथ |
| ३ | १२ | जीवस | .... जीवत्वस |
| ४ | ४ | सांधकस्य पुरुष | .... साधकपुरुष |
| ५ | १८ | तेद्व | .... तदेव |
| ९ | २ | दृृष्ट | ... दृष्ट |
| ,, | १३ | म | .... उ |
| ,, | २२ | त्रेव | .... त्रैव |
| १० | ४ | आनन्दमयः | ... आनन्दादयः |
| १२ | १ | गुणनत्व | ... गुणन |
| ,, | १२ | मेवामध्या | ... मेवाध्या |
| २७ | १२ | न्तरादसिद्धिः | .... न्तरासिद्धिः |
| ३७ | १५ | दुरपलापं | .... दुरपलपं |
| ३८ | ५ | भाष्यो | .... भाष्ययो |
| ४२ | ७ | ब्रह्मणो | ... ब्राह्मणो |
| ,, | ११ | विषत्व | .... विषयत्व |
| ,, | १४ | अन्न | ... आनन्द |
| ५१ | १३ | सर्वेशाब्पर | ... सर्वेशब्दपर |
| ५७ | ९ | कल्पतरु | ... कल्पतरुः |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | २२ | अन्यथा शब्द् | अन्यथाशब्द् |
| ५८ | ३ | अस्मिन्नेव | असन्नेव |
| ,, | ६ | नियमो | निर्देशो |
| ,, | ७ | उ – इदं श्रुतिबाधितं स्वाभाष्यबाधितञ्च ॥ | ( त्यक्तव्यम् ) |
| ,, | २३ | उत्सर्गः | उत्सर्गः । |
| ५९ | ७ | मणिनाऽपि | मणिनाऽपि । |
| ६० | १६ | बोधयित्वा | बोधयिषया |
| ६७ | ११ | मनिषा | मनीषा |
| ७९ | ६ | आद्य च | आद्यच |
| ९४ | ४ | अनिशयशो | अनीशाया शो |
| १०० | ९ | सिद्ध्यत् | सिद्ध्येत् |
| १०२ | १ | विश्रन्ता | विश्रान्ता |
| १०७ | १९ | रीत्या युक्तैव | रीत्याऽ युक्तैव |
| १०९ | २१ | ‘ तदनु | उ – ‘ तदनु |
| ११० | १८ | स्मादि | स्मादि |
| ११२ | २० | वाधि | वधि |
| ११५ | ७ | सम्मतः | सम्मतः । |
| ११६ | २३ | शुद्ध्योरी | शुद्धयोरी |
| ११७ | १९ | ब्रह्मप्राप्य | ब्रह्म प्राप्य |
| ११९ | १३ | ब्रह्म | बहु |
| १२० | ११ | वृत्त्य | वृत्त्या |
| ,, | २१ | न स पुतरा | न च पुनरा |
| ,, | २३ | त तु | न तु |